श्रीदक्षिणामूर्त्तये नमः । अथकवच
स्थदेवताकाम्यप्रयोगाः शतचण्डीवि
धिर्मन्त्रविभागकारिकाश्चसंगृह्यन्ते ॥
तत्राङ्गषट्केश्लोकानांन्यूनाधिकभावो
बहुपुस्तकेषूपलभ्यते तन्निराकरणार्थं
वचनानिलिख्यन्ते ॥ तत्रकवचांशश्लो
काउक्तादुर्गाप्रदीपकवचटीकायाम् ।

अधिकन्यूनतादोषपरिहारोचिकीर्षया ॥ देवीनाम्नांक्रमस्यापिकथनंक्रियते मया ॥ तेचश्लोकाः प्राचीनग्रन्थस्थाः सांप्रदायिकाएवालिख्यन्ते ॥ दशदिक्पालदेव्यश्चचामुण्डा चततः परम् ॥ जयाचविजयाचैवाप्यजिता चापराजिता ॥ १ ॥ उद्योतिनीतत

श्वोमामालाधारीयशस्विनी ॥ त्रिने
त्रायमघण्टा च शंखिनीद्वारवासिनी
।२कालिकाशाङ्करीपश्चात्सुगन्धाचर्चि
का तथा ॥ अमृतादिकलापश्चात्ततः
स्यात्तुसरस्वती ॥ ३ ॥ कौमारीचण्ड
काचित्रघण्टामायामहादिका ॥ का
माक्ष्यनन्तरं सर्वमङ्गलाभद्रकालिका

॥ ४ ॥ धनुर्धरीनीलग्रीवाततः स्यान्न
लकूबरी ॥ खड्गधारिणिकापूर्ववज्रधा
रिण्यनन्तरम् ॥ ५ ॥ दण्डिनीचा
म्बिकाशूलेशानीस्याात्तु नलेश्वरी ॥
मनःशोकविनाशास्याल्ललिता शूल
धारिणी ॥ ६ ॥ कामिनीगुह्यपुर्वास्या
दीश्वरीचततः परा ॥ भूतनाथा ततः

स्यात्तुमहामहिषवाहिनी ॥ ७ ॥ भ
गवत्यापिविन्ध्यस्थामहापूर्वाबलातथा
॥ विनायकीनारसिंहीततः पश्चान्नि
तौजसी ॥ ८ ॥ श्रीधर्यैंतेच पाताल
वासिन्यन्तेकरालिनी ॥ ऊर्ध्वकेशीच
कौवेरीवागीशीपार्वतीतथा ॥ ९ ॥
कालरात्रिश्च मुकुटेशानीपद्मावतीत

थाः ॥ चूडामणिस्तथाज्वालामुख्यभे द्यातत: स्मृता ॥ १० ॥ ब्रह्माणीछ त्रपूर्वास्यादीश्वरीधर्मचारिणी ॥ च क्रिणीन्द्रवधुश्चण्डीमहालक्ष्मीश्चभै रवी ॥ ११ ॥ क्षेमपूर्वाकरीपश्चाद्वि जयाचजयान्तिका ॥ इत्येता: सम्य गाख्याता: कवचस्थाश्चशक्तय: ॥

इति ॥ १२ ॥ कवचश्लोकसंख्या
यथा-कवचेस्मिन्सार्धपञ्चाशत्संख्या
श्लोकसंग्रहः इतिवाराहीतन्त्रे ॥ अर्ग
लाश्लोकसंख्योक्ता तत्रैव-त्रयोविंशति
संख्यानांश्लोकानामत्रसंग्रहः इति
श्लोकाश्चतुर्दशैवात्र कीलकेसंप्रातिष्ठि
ताः इत्यपितत्रैव ॥ प्राधानिकरहस्य

संख्या यथा-सार्धत्रिंशत्समाख्याताः
श्लोकास्त्वत्रसुसंस्कृताः इति ॥
वैकृतिकरहस्यश्लोकसंख्यायथा श्लो
कानांचैकोनचत्वारिंशत्संख्याः प्रकी
र्तिताःइति ॥ मूर्तिरहस्यसंख्यायथा
पञ्चाविंशातिसंख्यास्तु श्लोका अत्रप्र
कीर्तिताः इति ॥ एवमुक्तप्रकारेणया

संख्याउक्तास्तादुर्गाप्रदीपेद्रष्टव्याः ॥
एतदतिरिक्ताः श्लोकाः प्रक्षिप्ताएवे
तिबोध्यम् ॥ अत्रकेचित् सप्तशती
पाठारम्भे शापोद्धारादिकमिच्छति
तत्प्रकारस्तन्त्रेषूक्तः ॥ सयथा त्रयोद
शप्रथमौद्वादशद्वितीयौ एकादशतृ
तीयौदशमचतुर्थौनवमपञ्चमावष्टम

षष्ठावध्यायौपठित्वासप्तमाध्यायांद्विः पठेदितिशापोद्धारप्रकारः ॥ उत्कीलनंयथा आदौ मध्यमचरित्रंपठित्वा ततः प्रथमचरित्रंततस्तृतीयचरित्रंपठेदिति ॥ तदुक्तम् अन्त्याद्यार्कद्विरुद्राग्निदिग्बध्यङ्केष्विभर्तवः ॥ अश्वोश्व इतिसर्गाणांशापोद्धारोमनोः क्रमः

इति । उत्कीलनेष्चरित्राणांमध्याद्य
न्त्यमितिक्रमइत्याहुः अङ्कोनवमइषुः
पञ्चमः इभोष्टमः अयं शापोद्धारक्र
मउत्कीलनक्रमश्चयद्यप्युपलभ्यते त
थापिविप्रतिपद्यन्तेबहवः । अत्रमूलं
चिन्त्यमितितुनागोजीभट्टाः । वस्तु
तस्तु एकेनवामध्यमेनैकेनेतरयोरिहे

तिरहस्याध्यायवचनेन यस्यैकपाठाव
सरोनास्ति तस्यमध्यमचरित्रपाठाभ्य
नुज्ञानात्तादृशस्य पुरुषस्यपूर्वोक्त
शापोद्धारोत्कीलनानुष्ठानस्यासंभवाद
भ्यनुज्ञानं व्यर्थमेवस्यात्तस्माच्छापो
द्धारादिकं नावश्यकमितिप्रतिभाति
यद्यप्येवंतथापि कीलकस्तोत्रोक्तक

ठेवाश्लोकोक्तंफलम् ॥ १० ॥ इत्थं
यदायदाबाधेतिश्लोकस्यजपे महामा
रीशांतिः ॥ ११ ॥ ततो वन्रेनृपोराज्य
मितिमन्त्रस्यजपे प्रतिश्लोकमादाव
न्तेचपाठेवापुनःस्वराज्यलाभः ॥ १२ ॥
हिनस्तिदैत्यतेजांसिइत्यनेनसदीपब
लिदानेघण्टाबन्धने च बालग्रहशां

तिः ॥ १३ ॥ आद्यावृत्तिमनुलोमेनपठि
त्वाततोविपरीतक्रमेणद्वितीयामनुलो
मेन तृतीयामित्येवमावृत्तित्रयेणाशी
घ्रंकार्यसिद्धिः ॥ १४ ॥ सर्वापत्तिवार
णायदुर्गेस्मृतेत्यर्धं ततोयदन्तियच्चदू
रकेइत्यृचंतदन्ते दारिद्र्यदुःखेत्यर्धमे
वंकार्यानुसारेण लक्षमयुतंसहस्रंशतं

वाजपः ॥ आदावन्ते प्रतिश्लोकपाठे
त्ववश्यंकार्यसिद्धिः ॥ १५ ॥ कांसोस्मी
त्यृचंआदावन्तेप्रतिश्लोकंपठेल्लक्ष्मी
प्राप्तिः ॥ १६ ॥ प्रतिश्लोकमन्त्रणात्र
स्मिन्नित्यृचं आदावन्तेपठेद्दण्पारिहा
रः॥ १७॥ मारणार्थमेवमुक्त्वासमुत्प
त्येतिश्लोकं प्रतिश्लोकमादावन्तेपठे

न्मारणोच्चाटनावृत्तिभिः फलसिद्धिः ॥१८॥
ज्ञानिनामपिचेतांसिइतिश्लोकजपमा
त्रेणसद्योमोहनमित्यनुभवसिद्धम् ।
प्रतिश्लोकमादावन्तेतच्छ्लोकपाठेत्व
वश्यम् ॥ १९ ॥ रोगानशेषानितिश्लो
कस्यादावन्तेप्रतिश्लोकपाठेसकलरो
गनाशः । तन्मन्त्रजपेपि ॥ २० ॥

सर्वेविघ्नाविनश्यन्ति शतचण्डीविधौ
कृते ॥ २ ॥ रोगाणांवैरिणांनाशोधन
पुत्रसमृद्धयः ॥ शंकरस्यभवान्यावा
प्रासादनिकटेशुभम् ॥ ३ ॥ मण्डपंद्वा
रवेद्याढ्यं कुर्यात्सध्वजतोरणम् ॥
तत्रकुण्डं प्रकुर्वीतप्रतीच्यांमध्यतो
पिवा ॥ ४ ॥ स्नात्वानित्यक्रियांकृत्वा

वृणुयाद्दशवाडवान् ॥ जितेन्द्रियान्स
दाचारान्कुलीनान्सत्यवादिनः ॥ ५ ॥
व्युत्पन्नांश्चण्डिकापाठरतांल्लज्जादया
वतः ॥ मधुपर्कविधानेनस्वर्णवस्त्रा
दिदानतः ॥ ६ ॥ जपार्थमासनंमालां
दद्यात्तेभ्योऽपिभोजनम् ॥ तेहविष्या
न्नमश्नन्तोमन्त्रार्थगतमानसाः ॥७॥

भूमौशयानाःप्रत्येकंजपेयुश्चाण्डिका
स्तवम्॥ मार्कण्डेयपुराणोक्तंदशकृत्वः
सचेतसः॥८॥ नवार्णचण्डिकामन्त्रंज
पेयुश्चायुतंपृथक् ॥ पृथक्सम्पुटीकर
णादितिशेषः । प्रत्येकमाह्मणौरयुत
जपःकार्यः। अष्टमीनवमीचतुर्द्दशी पौ
र्णमासीषुयथाशतावृत्तिसमाप्तिर्भवति

तथाऽरम्भःकर्तव्यइतिसांप्रदायिकाः॥ यजमानः पूजयेच्चकन्यानांनवकंशुभम् ॥ ९ ॥ द्विवर्षाद्द्वादशाब्दान्ताः कुमारीःपरिपूजयेत् ॥ एकाब्दायाः प्रीत्यभावोरुद्राब्दातुविवर्जिता ॥१०॥ नाधिकाङ्गींनहीनाङ्गींकुष्ठिनीं च व्रणाङ्किताम् ॥ अन्धांकाणांकेकरांचकुरू

पांरोमयुक्तनुम् ॥ दासीजातांरोगयु
क्तांदुष्टां कन्यांनपूजयेत् ॥ ११ ॥विप्रां
सर्वेष्टसंसिद्ध्यैयशसेक्षत्रियोद्भवाम् ॥
वैश्यजांधनलाभायपुत्राप्त्यैशूद्रजांय
जेत् ॥१२॥ द्विवर्षासाकुमार्युक्ता त्रिमू
र्तिर्हायनात्रिका ॥ चतुरब्दातुकल्या
णीपञ्चवर्षा तुरोहिणी ॥ १३ ॥ षड

द्राकालिकाप्रोक्ताचण्डिकासप्तहाय
नी । अष्टवर्षाशाम्भवीस्याद्दुर्गातु
नवहायनी ॥ १४ ॥ सुभद्रादशवर्षो
क्तास्तामन्त्रैःपरिपूजयेत् ॥ तासामा
वाहनेमन्त्रःप्रोच्यतेशंकरोदितः॥१५॥
मन्त्राक्षरमयींलक्ष्मींमातृणां रूपधा
रिणीम् ॥ नवदुर्गात्मिकांसाक्षात्कन्य

मावाहम्याययहम् ॥ १६ ॥ कुमारिका
दिकन्यानांपूजामन्त्रान्ब्रुवेऽधुना ॥
॥ १७ ॥ जगत्पूज्येजगद्वंद्येसर्वशक्ति
स्वरूपिणि ॥ पूजांगृहाणकौमारिज
गन्मातर्नमोस्तुते ॥ १८ ॥ त्रिपुरांत्रि
पुराधारांत्रिवर्गज्ञानरूपिणीम् । त्रै
लोक्यवन्दितांदेवींत्रिमूर्त्तिं पुजयाम्य

हम् ॥ १९ ॥ कालात्मिकांकलातीतां
कारुण्यहृदयांशिवाम्॥कल्याणजननीं
देवींकल्याणींपूजयाम्यहम् ॥ २० ॥
अणिमादिगुणाधारामकाराद्यक्षरात्मि
काम् ॥ २१ ॥ कामदांकरुणोदारांका
लिकांपूजयाम्यहम् ॥ २२ ॥ चण्डवी
रांचण्डमायांचण्डमुण्डप्रभञ्जनीम् ॥

पूजयामिसदादेवींचण्डिकांचण्डविक्र
माम् ॥ २३ ॥ सर्वभूतात्मिकांलक्ष्मीं
शाम्भवींपूजयाम्यहम् ॥ २४ ॥ दुर्गमे
दुस्तरेकार्यें भवदुःखविनाशिनीम् ॥
पूजयामिसदाभक्त्यादुर्गां दुर्गार्तिना
शिनीम् ॥ २५ ॥ सुन्दरींस्वर्णवर्णा
भांसुखसौभाग्यदायिनीं ॥ सुभद्रज

नन्दीं देवीं सुभद्रां पूजयाम्यहम् ॥ २६ ॥
एतैर्मन्त्रैः पुराणोक्तैस्तांतांकन्यांसम
र्चयेत् ॥ गन्धैः पुष्पैर्भक्ष्यभोज्यैर्व
स्त्रैराभरणैरपि ॥ २७ ॥ वेद्यांविरचि
तेरम्येसर्वतोभद्रमण्डले ॥ घटसंस्था
प्यविधिनातत्रावाह्यार्चयेच्छिवाम २८
तदग्रेकन्यकांश्चापिपूजयेद्ब्राह्मणान

पि ॥ उपचारैस्तुविविधैः पूर्वोक्तावर
णान्यपि ॥ २९ ॥ एवंचतुर्दिनंकृ
त्वापञ्चमेहोममाचरेत्।पायसान्नैस्त्रि
मध्वक्तैर्द्राक्षारम्भाफलादिभिः ॥ ३० ॥
मातुलिङ्गैरिक्षुखण्डैर्नारिकेलैःपुरैस्ति
लैः ॥ जातीफलैराम्रफलैरन्यैर्मधुरव
स्तुभिः ॥ ३१ ॥ कृत्वावरणदेवानांहो

मंतन्नाममन्त्रतः ॥ कृत्वापुर्णाहुतिं स
म्यग्देवमग्निंविसृज्यच ॥ ३३ ॥ अभि
षिञ्चेच्चयष्टारंविप्रौघः कलशोदकैः ॥
निष्कंसुवर्णमथवाप्रत्येकं दक्षिणांदि
शेत् ॥ ३४ ॥ भोजयेच्चशतंविप्रान्भ
क्ष्यभोज्यैः पृथग्विधैः ॥ तेभ्योऽपि
दक्षिणांदत्वागृह्णीयादाशिषस्तथा ॥

॥ ३५ ॥ इतिमंत्रमहोदधौशतचण्डी
विधानंसमाप्तम् ॥ श्रीरस्तु ॥
अथास्याः सप्तशत्यावाचनक्रमप
द्धतिः दुर्गार्चासारसंग्रहेवाराहीतन्त्रे ॥
प्रथमे चरिते बीजमोमित्येकं वदंति
हि ॥ ह्रीमित्याद्येमध्यमे श्रीं क्लीं
तथाचरितेऽन्तिमे ॥ ऐंबीजंप्रथमेऽ

ध्यायेह्रीं तथाचद्वितीयके ॥ क्लींतृ
तीयेपुनश्चैवंचतुर्थेविनियोजयेत् ॥ प
ञ्चमादिष्वेवमेवद्वादशावधिपार्वति ।
ऐंह्रींक्लींमितिबीजानिलापयेच्चत्रयो
दशे ॥ यावन्नपूर्यतेऽध्यायस्तावन्नावि
रमेत्काचित् । यदिप्रमादादध्यायेवि
रामोभवतिप्रिये ॥ पुनरध्यायमा

रभ्यपठेत्सर्वंमुहुर्मुहुः ॥ अनुक्रमात्पठे
द्देविशिरःकम्पादिकंत्यजेत् ॥ नमान
संपठेत्स्तोत्रंवाचिकतुं प्रशस्यते ॥
नस्वयंलिखितंस्तोत्रंनाब्राह्मणालिपिंप
ठेत् ॥ कण्ठतः पाठाभावेतुपुस्तकोप
रिवाचयेत् इति ॥ आधारस्थापयि
त्वातुपुस्तकंवाचयेत्ततः ॥ हस्तसंस्था

पनादेवभवेदर्धफलंध्रुवमिति ॥ पुनश्च
तत्रैव ॥ पुस्केवाचनंहस्तेसहस्रादाधि
कंयदि ॥ ततोन्यूनस्यतु भवेद्वाचनंपु
स्तकंविना ॥ सहस्रान्न्यूनमंत्रस्यपा
ठसत्वेपुस्तकंविनैववाचनम् ॥ तदभा
वेत्र्याधारे पुस्तकस्थापनेनैववाचनम्
सहस्राधिकस्यतुपाठसत्त्वेवाधारस्थापि

प्रकृतस्तोत्रस्यसहस्रान्न्यूनत्वात्ततः
कृताञ्जलिर्भूत्वास्तुवीतचरितैरिमैरि
तिवैकृतिकरहस्येविधानाच्च ॥ पाठा
भावे पुस्तकस्याधारस्थापनेनैववाच
नं कण्ठपाठीकृत्यपुस्तकंविनैवतुकृता
ञ्जालितयापठनमुत्तममितिद्रष्टव्यापि
तिस्पष्टंशक्तिसङ्गमतन्त्रे ॥ तद्वचनंतु

दुर्गाप्रदीपेद्रष्टव्यामिति ॥ लुप्तस्मृत्याः सप्तशत्याः सरणीरचितामया ॥ तयातुष्यतुसादेवीबालावात्रिपुरेश्वरी १ अत्रसर्वत्रमूलवचनानि दुर्गामहोदधौ द्रष्टव्यानीतिशिवम् ॥

इतिप्रयोगविधिः समाप्तः ॥

अथास्यसप्तशतमन्त्रविभागस्य

प्राचीनोक्ताः कारिकाः लिख्यन्ते ॥
मार्कण्डेयउवाचेतिप्रथमोमंत्रईरितः ॥
ततोमन्त्राःसप्तदशाप्यर्धश्लोकात्मका
स्ततः ॥१॥ वैश्योक्तिरग्रतोर्धः स्यात्त
तोमन्त्रास्त्रयःस्मृताः ॥ कथंतइत्यप्य
र्धस्याद्राजोवाचेतिमन्त्रकः ॥ २ ॥
ततश्चार्द्धद्वयंमंत्रो वैश्योक्तिस्तदनन्त

रम् ॥ ततोर्धमन्त्रः संप्रोक्तस्त्रयः श्लो
कामनुत्रयम् ॥ ३ ॥ करोमिकिंयदर्धः
स्यान्मार्कण्डेयवचस्ततः ॥ ततस्ता
विदमर्धः स्यादेकः श्लोकात्मकोमनुः
॥ ४ ॥ उपविष्टेत्यर्धमन्त्रोराजोवाच
मनुस्तथा ॥ भगवन्नितिचार्धः स्याच्च
तुःश्लोकीचतुष्टयम् ॥ ५ ॥ ममास्ये

त्यर्धमन्त्रः स्यान्मुनिवाक्यंततः पर

म् ॥ ज्ञानमस्तीत्यर्धमन्त्रोदशमन्त्र।

स्ततः परम् ॥ ६ ॥ संसारेत्यर्धमन्त्रः

स्याद्राजोवाचमनुस्ततः ॥ भगवन्के

त्यर्धमन्त्रोमनुः श्लोकात्मकस्ततः।७।

तत्सर्वमर्धमुनिवाक्नित्यैवेत्यर्धमन्त्र

कः ॥ षगमन्त्रास्तुततः प्रोक्ता निद्रा

मित्यर्धमन्त्रकः ॥ ८ ॥ ब्रह्मोवाचत
तोऽर्धःस्यात्त्रयोदशततः परम् ॥ बो
धश्चेत्यर्धमन्त्रः स्यान्मुनिवाक्यंततः
परम् ॥ ९ ॥ एवंस्तुतेत्यर्धमन्त्रः प
ञ्चमन्त्रास्ततःपरम् ॥ उक्तवन्तावर्ध
मनुर्भगवद्वाक्यमेवच ॥ १० ॥ भवे
तामिदमर्धस्यात्किमन्येनेति चार्धक

म् ॥ मुनिवाक्यंपुनश्चार्धंततः स्याच्छ्
लोकमन्त्रकः ॥ ११ ॥ मुनिवाक्यंत
तोमंत्रौद्वौप्रोक्तौचरमौपरौ॥इत्येवंप्रथ
मेऽध्यायेमन्त्रसंख्यासमीरिता ॥१२॥
द्वितीयेऋषिवाक्यंस्यादष्टषष्ठ्यर्णवः
स्मृताः ॥ तृतीयेमुनिवाक्यंतुपञ्चत्रिं
शत्तथार्णवः ॥ १३ ॥ देवीवाक्यंतत

श्चैकः श्लोकोमुनिवचस्तथा ॥ पञ्च
श्लोकास्ततोमन्त्रास्तृतीयेऽध्यायईरि
ताः ॥ १४ ॥ चतुर्थेमुनिवाक्यंतुषड्विं
शतिरथार्णवः ॥ मुनिवाक्यंततोमन्त्र
द्वयंदेवीवचस्तथा ॥ १५ ॥ अर्धश्लो
कात्मकोमन्त्रोदेवाऊचुस्ततः परम् ॥
भगवत्येत्यर्धमन्त्रास्ततः श्लोकत्रयं

स्मृतम् ॥ १६ ॥ मुनिवाक्यंवेदमंत्राः
स्युरध्यायेऽथपञ्चमे॥ मुनिवाक्यंचष
ट्श्लोकादेवाऊचुस्ततः परम् ॥ १७॥
पञ्चश्लोकाः स्तुतेर्मन्त्रायादेवीत्या
दितः पुनः ॥ भ्रान्तिदेव्यन्तिमामन्त्रा
एकविंशतिरीरिताः ॥ १८ ॥ तेषांख
ण्डत्रयेणैवत्रिषष्ठ्याहुतयोऽभवन् ॥

विंशत्यक्षरपर्यन्तंप्रथमः खण्डईरितः
॥ १९ ॥ वेदाक्षरोद्वितीयस्तुतृतीयोऽ
ष्टाक्षरः स्मृतः ॥ इन्द्रियेत्येकमन्त्रः
स्याच्चिचातिरूपेतिचत्रयम् ॥२०॥ पूर्व
वच्चततोमन्त्रौद्वौमुनेर्वाक्यमेवच ॥स
प्तदशाथमन्त्राः स्युर्मुनिवाक्यंत्रयो
र्णव: ॥२१॥ दूतवाक्यंनवश्लोकामुने

र्वाक्यंसकृन्मनुः॥ देवीवाक्यंवेदमन्त्रा
दूतवाक्यंततः परम् ॥ २२ ॥ चत्वार
स्तुपुनः श्लोकादेवीवाक्यमनुद्वयम् ॥
अथषष्ठमुनेर्वाक्यंचत्वारः श्लोकम
न्त्रकाः ॥२३॥ ऋषिवाक्यंत्रयोमंत्रादे
वीवाक्यंसकृन्मनुः ॥ ऋषिवाक्यंततः
श्लोकमन्त्राद्वादशसंमताः ॥ २४ ॥

सप्तमेथ मुनेर्वाक्यंत्रयोविंशतिमंत्र
काः ॥ मुनिवाक्यंचमंत्रौद्वौभवेतामष्ट
मेततः ॥ ॥ २५ ॥ मुनिवाक्यंत्रिष
ष्ठ्यात्महुतयोर्घांहुतिस्तथा ॥ नवमेरा
जवाक्यंतुश्लोकद्वयमतः परम् ॥२६॥
मुनिवाक्यंततः सप्तत्रिंशच्छ्लोका
स्तुमंत्रकाः ॥ दशमेमुनिवाक्यंतुमन्त्र

द्वयमतः परम् ॥ २७ ॥ देवीवाक्यंच
मन्त्रौद्वौपुनर्दैव्यैकमन्त्रकः ॥ मुनिवा
क्यंततोद्वाविंशत्याहुतयईरिताः ॥२८॥
अधर्मन्त्रोऽन्तिमः प्रोक्तस्ततएकादशे
पुनः ॥ मुनिवाक्यंचतुस्त्रिंशच्छ्लोका
देवीवचस्ततः ॥२९॥ एकमन्त्रस्ततो
देवीऊचुरित्येकमन्त्रकः ॥एकमन्त्रोऽ

म्बिकावाक्यंचतुर्दशतथार्णवः ॥ ३० ॥ अर्धमन्त्रोन्तिमः प्रोक्तोद्वादशेऽध्यांबिकावचः ॥ अष्टाविंशतिमन्त्राः स्युरेकाप्यर्धाहुतिस्तथा ॥ ३१ ॥ पुनर्ऋषिस्ततोर्धःस्यान्नवश्लोकास्त्रयोदशे ॥ एकादशार्धाहुतयोद्वादशश्लोकमन्त्रकाः ॥ ३२ ॥ उवाचवचनैः षड्भिरेकोन

त्रिंशदीरिताः ॥ गौडपादीयभाष्या
ब्धेः कारिकाऽमृतमुद्धृतम् ॥३३॥ पि
बन्तुविविधाः सर्वेस्मृतिनाशोयतोभवे
त् ॥ ३४ ॥ इतिश्रीसप्तशतीमन्त्रवि
भागकारिकावलिः समाप्ता ॥ श्रीगणे
शायनमः ॥ अथब्रह्मशापाविमोचन
मन्त्रस्य वसिष्ठनारदसंवादाधिपत्ये।

ब्रह्माऋषिः सर्वैश्वर्यकारिणी श्री
दुर्गादेवता चरित्रत्रयबीजं ह्रीं
शक्तिरूपिणि कल्पितकार्यसिद्ध्यर्थे ज
पेविनियोगः॥ ॐ रामैः स्वररूपायैम
धुकैटभमर्दिन्यैब्रह्मशापविमुक्ता भव
ॐश्रीबुद्धिरूपिण्यै महिषासुरसैन्यना
शिन्यै ब्रह्मशापविमुक्ता भव ॐ ररक्त

रूपिण्यैमहिषासुरमार्दिन्यैशुंभवघका
रिण्यैब्रह्मशापाविमुक्ताभव । ॐ श्री
श्रद्धारूपिणयैफलदाऽयै । ब्रह्मशापवि
मुक्ताभव। ॐश्रीं ह्रीं दुर्गायैसर्वैश्वर्यका
रिण्यैब्रह्मशापविमुक्ताभव। ॐक्लींह्रीं
ॐ नमः शिवायैअभेद्यकवचरूपि
णयैब्रह्मशापविमुक्ताभव। ॐ कल्पका

लिह्रींफट्स्वाहायैऋग्वेदरूपिण्यैब्रह्म
शापाविमुक्ताभवॐ॥इतिश्रीरुद्रयामले
चाण्डिकाशापमोचनंसंपूर्णम् ॥ * ॥
गुप्तवत्यऽनुरोधेनदेव्यागमविधानतः
॥ पाठक्रमं सुसंयोज्यन्यासध्यानादि
पूर्वकम् ॥ १ ॥ भूशुद्ध्यादिन्यासपूर्वमा
दौदेव्यर्चनंततः ॥ योजितंबलिदानादि

कुमारीपूजनादिकम् ॥ २ ॥ एकादश
विधन्यासांश्चक्रन्यासंनवार्णाकम् ॥ य
थावत्परिकल्प्यादौसप्तशत्याःसमास
तः॥ ३॥इति शम् ॥देव्यासमंरजतचारु
शिलोपविष्टं लोकेशकेशवनिरन्तरव
न्द्यमानम् ॥ स्वानन्यभक्तजनपाल
नसाभिलाषं श्रीवैद्यनाथमतिकारु

णिकंनमामि ॥ १ ॥ प्रणम्यश्री
महाकालींभवसागरतारिणीम् । लि
ख्यतेमहावीरेणादुर्गायाःपाठपद्धतिः॥२
अथ सप्तशतीविधिः ॥ तत्र साधकः
कृतप्रातः स्नानसन्ध्यादिनित्यकृत्यः
प्राङ्मुखः सन्आदावाचामेत् तद्यथा
॥ ॐ ऐं आत्मतत्त्वंशोधयामिनमः

स्वाहा॥ॐ ह्रीं विद्यातत्त्वं शोधयामि नमः स्वाहा ॥ ॐ क्लींशिवतत्त्वंशोधयामिनमःस्वाहा॥ॐ ऐं ह्रीं क्लीं सर्व तत्वंशोधयामिनमःस्वाहा ॥ अनन्तरंपवित्रपाणिः प्राणायामं कुर्यात् । ।यथा मूलमन्त्रेण वामनासिकया वायुमापूर्य्य कुम्भकेचतु र्वारंमूलं प

ठित्वा द्विवारं मूलमुच्चरन् दक्षनास
यातंरेचयेत् ॥ ततः श्रीगणेशादीन्न
त्वासङ्कल्पं कुर्यात् ॥ सयथा देश
कालौसंकीर्त्य । सकुटुम्बानामस्माकं
सर्वेषां क्षेमस्थैर्यायुरारोग्यैश्वर्य्याभि
वृद्ध्यर्थं सकलमङ्गलप्राप्त्यर्थम्,
अमुकगोत्रस्यामुकनाम्नोममश्रीजग

दम्बाप्रसादेन व्याधिपरिहाराऽपमृत्यु
नाशऋणमोक्षशत्रुपराभववशीकरण
ग्रहपीडापरिहारादि पूर्वकसर्वाभीष्ट
फलप्राप्तिधर्मार्थकाममोक्षचतुर्विधपु
रुषार्थसिद्धिद्वारा श्रीमहाकालीम
हालक्ष्मीमहासरस्वती देवताप्रीत्य
र्थं कवचार्गलाकीलकैकादशन्यासपू

र्वकनवार्णमन्त्राष्टोत्तरशतजपरात्रि
सूक्तपाठपूर्वकं देवीसूक्तपठननवार्णम
न्त्रा ष्टोत्तरशतजपरहस्य त्रयपठना
न्तं श्रीचण्डीसप्तशत्याः पाठमहं क
रिष्ये । तदङ्गत्वेनादौसंक्षेपतः आ
सनविधि भूशुद्ध्यादिकर्मदीपस्थापन
श्रीसप्तशतीपूजनंरहस्योक्तमन्त्रस्यप्र

धानदेवतापूजनंतन्त्रोक्तनवार्णमन्त्र
स्थप्रधानदेवतापूजनंपायसेनइक्षुखण्ड
कूष्माण्डादिअन्यतमफलेन वा पूजा
ङ्गबलिदानञ्चसकलशापप्रतिबन्ध
निवृत्तयेतन्त्रोक्तशापोद्धारमन्त्रस्यस
प्तवारं जपमिष्टफलासिद्धिप्रतिबन्धनि
वृत्तयेतन्त्रोक्तोत्कीलनमन्त्रस्य पाठा

दौपाठान्तेचैकाविंशाति संख्या जपञ्च
करिष्ये ॥ आदौनिर्विघ्नतासिद्ध्यर्थं
श्रीगणेशस्मरणं सद्गुरुपादुकास्मर
णंपूजनंवाकरिष्ये गणानान्त्वाशौन
कोगृत्समदोगणपतिर्जगती निर्विघ्न
तासिद्ध्यर्थेंमहागणतिस्मरणे पूजने
वाविनियोगः। ॐगणानान्त्वागणप

तिंहवामहे कविंकवीनामुपमश्रवस्तम
म् ॥ ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत
आनः शृण्वन्नूतिभिःसीदसादनम् ॥
सिद्धिबुद्धिशक्तिसहित श्रीमहागणपत
येनमोनमःइति।तथागुरुञ्च।नमोगुरु
भ्योगुरुपादुकाभ्योनमः परेभ्यःपरपादु
काभ्यः ॥ आचार्य्यसिद्धेश्वरपादुका

भ्योनमोस्तु लक्ष्मीपतिपादुकाभ्यः
॥ इति श्रीगणपतिंगुरुंचप्रणम्य ॥अ
थासनविधिर्यथा, कल्पितासनाधोज
लादिनात्रिकोणंविलिख्य ॐ ह्रीं आधा
रशक्तिकमलासनायनमः इत्याधारश
क्तिंसंपूज्य,तदुपरि अनुद्विग्नताकरम
जिनोर्णाद्यासनमास्तीर्य्य, ॐ पृथ्वी

तिमन्त्रस्यमेरुपृष्ठऋषिःसुतलञ्छन्दः
कूर्म्मोदेवताऽऽसने विनियोगः। ॐ
पृथ्वीत्वयाधृतालोकादेवित्वंविष्णुना
धृता॥ त्वञ्चधारयमांदेवि पवित्रंकुरु
चासनम् इतिमन्त्रेणाधारशक्तिंसंप्रा
र्थ्य, ॐ भूर्भुवः स्वइत्यासनं संप्रो
क्ष्यतास्मिन्नासनेप्राङ्मुखउदङ्मुखो

वाउपाविश्य,ततःस्ववामे गुंगुरुभ्योनमः
दक्षिणेभंभद्रकाल्यैनमः उपरिगंगणप
तयेनमःइतिद्वारदेवताःसम्पूज्य॥अथ
विघ्नोत्सारणमात्मसंरक्षणञ्च ॥ मूलं
पठन्नादिव्यदृष्ट्यवलोकनेन दिव्यान्
विघ्नानुत्सारयामि,ॐ फडितिप्रोक्ष
णेनान्तरिक्षान्विघ्नानुत्सारयामि ॐ

फडितिवामपादपार्ष्णिघातेन भौमान्
विघ्नानुत्सारयामि, ॐ अस्त्राय फ
डितितालत्रयेणदिग्बन्धनं कृत्वा,ॐ
नमः सुदर्शनाय अस्त्रायफडितिमन्त्रे
णछोटिकयावह्निप्राकारत्रयं विभाव्य
भूशुद्ध्यादिकंकुर्य्यात् तत्रभूशुद्धिर्यथा
गायत्रीमन्त्रेणप्राणानायम्य, हुंइति

बीजेनकुण्डलिनीमुत्थाप्यहृदिस्थंदीप
कलिकाकारं जीवंॐहंसःइतिमन्त्रेण
ब्रह्मणिसंयोज्य, स्वदक्षिणकुक्षिस्थंपा
पपुरुषंध्यात्वायामितिषोडशवारोच्चा
रितवायुबीजेनपिङ्गलयापूरकेण पापपु
रुषंतंशोषयित्वाकुम्भकेरामितिचतुःष
ष्टिवारोच्चारिताग्निबीजेनतंदग्ध्वापुनः

यमिति,द्वात्रिंशद्वारोच्चारितवायुबीजे
नतद्भस्म इडया ( वामनासया )
रेचयेत्ब्रह्मरन्ध्रगतेचन्द्रमण्डलेऽमृत
वर्षिणीम् ॥ भवानींभूमिशुद्ध्यर्थं
भावयेदमृतेश्वरीम् ॥ ततस्तन्मौलि
निष्पन्दसुधाकल्लोलवृष्टिभिः ॥ चि
न्तयेन्मनसात्मानं भूमिशुद्धिरियंम

वेत् ॥ इतिसंक्षेपतोभूमिशुद्धिः । अथ
भूतशुद्धिः ॥ वामनासयावायुमापूर्य्य
कुम्भकेलंवंरंयंहमितिपंचभूतबीजानि
सकृदावर्त्त्यंदक्षिणनासयारेचयेत् त
तोवमित्यमृतबीजेन प्राणायामं कृत्वा
सद्वासनात्मकं देवीशरीरमुत्पाद्यसोहं
मिति मन्त्रेणकुण्डलिनींब्रह्मणोव

हृत्य तत्रस्थं जीवंहृदिनिधाय कुण्ड
लिनीं मूलाधारगतां विभावयेदिति
संक्षेपतोभूतशुद्धिः॥ अथप्राणप्रातिष्ठा॥
हृदिहस्तंदत्वा, ॐ आंह्रींक्रों ममप्राण
इहप्राणाः, ॐ आंह्रींक्रोंममजीवइह
स्थितः। ॐ आंह्रींक्रों ममसर्वेन्द्रि
याणि ॐ आंह्रींक्रों ममवाङ्मन

स्त्वक् चक्षुः श्रोत्रजिह्वाघ्राणप्राणा
इहागत्यसुखंचिरंतिष्ठन्तुस्वाहा, ॐ
असुनीतेपुनरस्मासुचक्षुः पुनः प्राण
मिहनोधेहिभोगम् ॥ ज्योक्पश्यम
सूर्य्यमुच्चरन्तमनुमतेमृडया नः स्व
स्ति ॥ ममगर्भाधानादि पञ्चदशसं
स्कारासिद्ध्यर्थं पञ्चदशप्रणावावृत्तीः

करिष्ये ॐ इति पञ्चदशवारं जपेत् ॥
रक्ताम्भोधिस्थपोतोल्लसदरुणसरो
जाधिरूढाकराब्जैः पाशं कोदण्डमि
क्षुद्भवमथगुणमप्यङ्कुशं पञ्चबा
णान् ॥ बिभ्राणासृक्कपालं त्रिनयन
लसिता पीनवक्षोरुहाढ्या देवी
बालार्कवर्णा भवतु सुखकरी प्राणश

क्तिः परा नः ॥सुप्रतिष्ठितमस्तु । इति
प्राणप्रतिष्ठा ॥ ततो मातृकान्यासो
यथा ॐ अंनमः ललाटे आंनमः मुख
वृत्ते इंनमः दक्षिण नेत्रे,ईं नमः वाम
नेत्रे उंन० दक्षिणकर्णे ऊंन० वामकर्णे,
ऋंन० द० नासिकायाम्० ॠं न० वा०
नासि० लृंन० द० कपोले, ॡं० वा०

कपोले, एं न० ऊर्ध्वौष्ठे, ऐं न० अध
रोष्ठे, ओं० ऊर्ध्वदन्तपङ्क्तौ, औं न०
अधोदशनपङ्क्तौ, अं० शिरसि, अः
न० मुखे, कं न० द० बाहुमूले खं०
द० कूर्परे, गं न० द० मणिबन्धे,
घं न० दक्षिणाङ्गुलिमूले, ङं० दक्षिणा
ङ्गुल्यग्रे, चं न० वामबाहुमूले छं० वा०

कूर्परे, जं० वा० मणिबन्धे, झं० वामा
ङ्गुलिमूले, ञं० वामाङ्गुल्यग्रे, टं०
दक्षिणपदमूले, ठं० द० जानुनि डं०
द० गुल्फे, ढं० द० पादाङ्गुलिमूले णं०
द० पादाङ्गुल्यग्रे, तं० वामपादमूले,
थं० वामजानुनि दं० वा० गुल्फे, धं०
वामाङ्गुलिमूले, नं० वामाङ्गुल्यग्रे,

पं० द० पार्श्वे, फं० वामपार्श्वे, बं० पृष्ठे,
भं० नाभौ मं० जठरे, यं० हृदि, रं०
दक्षिणांसे, लं० ककुदि, वं० वामांसे,
शं० हृदयादि दक्षिणहस्तान्तम् षं०
हृदयादिवामहस्तान्तम् सं० हृदयादि
दक्षपादान्तम् हं० हृदयादिवामपादा
न्तम्, ळं० जठरे, क्षंनमः मुखे ॥ प्रण

वादिःसर्वत्रेति तत्त्वमुद्रयामातृका न्या
संकुर्यात् ॥ अथदीपप्रतिष्ठा ॥ मूलेना
चम्य प्राणानायम्य कर्मसाक्षित्वेन दी
पस्थापनंकुर्यात् । तत्रदीपाधारयन्त्रं
त्रिकोणंगन्धेन देवीदक्षिणतोलिखि
त्वा,दीपाधारयन्त्रायनमः इति मन्त्रे
णसंपूज्य तदुपरिदीपंसंस्थाप्यगन्धा

दिनादीपंसम्पूज्यप्रार्थयेत्।दीपप्रार्थना
यथा, भोदीपदेवीरूपस्त्वं कर्म्मसाक्षी
ह्यविघ्नकृत्। यावत्कर्म्मसमाप्तिःस्या
त्तावत्वंसुस्थिरोभव॥ इत्यनेनदीपं
संप्रार्थ्य तथैव वामेऽपितैलदीपं प्रज्वा
लयेत्॥ इत्येवंस्थापितदीपद्वयमा
समाप्तिसंरक्षेदिति॥ अथयन्त्रेदेवता

स्थापनंद्वयमध्यपीठेताम्राद्यन्यतमप
त्रेभूर्जपत्रेवाकुङ्कुमादिना(चन्दनाऽ
गुरुकर्पूरं कुंकुमं रोचनं तथा॥शिलारसो
जटामांसी कर्चूरंचैकवृद्धितः) इतिदे
व्यष्टगन्धेन रक्तचन्दनेनवानवकोष्ठं
यन्त्रं कृत्वा प्रथमपङ्क्तौईशानकोणा
दग्निकोणपर्यन्तंरुद्रगौर्य्यौविरिञ्चि

सरस्वत्यौ विष्णुलक्ष्म्यौ इतिक्रमेण संस्थाप्य, मध्यपङ्क्तावुत्तरतोदक्षिणान्तं उदकसंस्थंवा महाकालीमहालक्ष्मीमहासरस्वत्यः तथा तृतीयपङ्क्तौ वायुकोणान्निर्ऋतिकोणपर्यन्तं क्रमेणादशाननाष्टादशभुजाऽष्टभुजाःस्थापयेत्॥अथवातन्त्रोक्तं सप्त

शतीमहायन्त्रम् ॥ वेद्यां विरचितेरम्ये
सर्वतोभद्रमगडले ॥ घटंसंस्थाप्य
विधिवत्तत्रावाह्यार्चयेच्छिवाम् ॥ ३ ॥
तदग्रे कन्यकाश्चापिपूजयेद्ब्राह्मणा
नपि ॥ उपचारैस्तुविविधैर्नवार्णावरणै
रपीति ॥४॥ अथ प्रयोगः ॥ वेद्यां सर्व
तोभद्रेब्रह्मादिमण्डलदेवता आवाह्य

संपूज्य,तस्मिन्महाद्यौरित्यादिमन्त्रैः
कलशं संस्थाप्य तत्रवरुणं संपूज्यत
न्मूले मूलाधारायनमः मूलाधारमा
वाहयामि १ इतिसर्वत्र, तदुपरिकू
र्मायनमः २ तदुपरिशेषायनमः ३ त
दुपरिपृथिव्यैनमः ४ पूर्णपात्रेॐकार
पीठाय० ५ पूर्वे ॥ पूर्णगिरिपीठाय

नमः ६ निर्ऋतिभागे । कामागिरिपी
ठायनमः वायुभागे आवाह्य सम्पूज्य
उपरियन्त्रंसंस्थाप्य प्राणप्रतिष्ठांकुर्या
त् ॥ अथ संक्षेपतः पूजाविधिः ॥
अस्य श्रीनवार्णमन्त्रस्य ब्रह्मविष्णु
महेश्वराऋषयः गायत्र्युष्णिगनुष्टभ
श्छंदांसिश्रीमहाकाली महालक्ष्मी

महासरस्वत्योर्देवता:नन्दाशाकम्भरी
भीमा:शक्तय: रक्तदन्तिकादुर्गाभ्राम
र्योबीजानि अग्निवायुसूर्यास्तत्वानि
श्रीजगदंबाप्रीत्यर्थे न्यासेपूजायां च
विनियोग: ॥ ऋष्यादिन्यासान्मूल
षडङ्गन्यासांश्चविधायकलशशंखघ
ण्टा: सम्पूज्य ॥ अपवित्र:पवित्रोवा

सर्वावस्थागतोऽपिवा ॥ यःस्मरेत्पु
ण्डरीकाक्षंसबाह्याभ्यन्तरंशुचिः ॥
मूलेन चात्मानंपूजाद्रव्याणिप्रोक्षेत्
विस्तरभयादर्घ्यस्थापनंनेहलिख्यते य
न्त्रंसंस्पृश्य ॐ आंसोहंइतित्रिवारो
च्चारितमन्त्रेण यंत्रस्यप्राणप्रतिष्ठांकृ
त्वा ततः त्रिखण्डामुद्रयापुष्पमादा

यस्वहृदिस्थां त्रिगुणां देवींसुषुम्णा
मार्गेणाब्रह्मरन्ध्रद्वारा कुसुमेसमागतां
विभाव्यतत्ररूपत्रयंविभ्राणां ध्यायेत्
खड्गंचक्र० १ अक्षस्रक्प २ घंटा
शूल० ३ इति तत्पुष्पंयंत्रेसंस्थाप्य
तत्रमध्यबीजत्रयेमहालक्ष्म्यादिदेव
तात्रयंसंस्थितंविभावयेत् ततः आ

वाहनी, स्थापनी, संनिधापिनी, संनिरोधिनी, धेनु, योनि मुद्रामूलेन प्रदर्श्य मूलमुच्चार्य श्रीमहाका० नमः आवाहयामि एवंमूलेनासनपाद्या र्घ्याचमनीयस्नानमङ्गलस्नानमधुप र्कपंचामृतपूजांविधाय श्रीसूक्तादिभि रभिषिच्य मूलेनवस्त्रोपवस्त्रोत्तरी

यकञ्चुकीवस्त्रयज्ञोपवीतचन्दनाल

ङ्कारहारिद्राकुङ्कुमकज्जलसिन्दूरपरि

मलद्रव्यकङ्कणकण्ठसूत्रादिसौभाग्या

लङ्कारपुष्पाणि ॥ मूलं श्रीमहा० ३

नमः अमुकंसमर्पयामीतिप्रत्युपचार

मुच्चार्य पुष्पांतपूजायांआवरणदेव

ताआवाह्यसंपूजयेत् ॥ अत्रसर्वत्रपू

ज्यपूजकयोर्मध्येप्राचीदिक्संप्रकीर्ति
ता ॥ इतिवचनमनुसृत्यप्रागादिदि
शोग्राह्याः इन्द्रादिलोकपालतदायुध
विषयेतु सूर्योदयैकवतिज्ञेयं तत्रयन्त्र
षट्कोणस्थपश्चिमकोणे महालक्ष्मी
पृष्ठभागे सरस्वतीब्रह्मभ्यांनमः सर
स्वतीब्रह्माणावावाहयामीत्येवंसर्वत्रा

वाहनेवाच्यं १ एवंनैऋत्यकोणे
गौरीरुद्राभ्यां० २ वायुकोणेलक्ष्मी
हृषीकेशाभ्यां० ३ पूर्वकोणे अष्टाद
शभुजायै० ४ अग्निकोणे दशान
नायै० ५ ईशानकोणे अष्टभुजायै०
६ दयाब्धेत्राहिसंसारसर्पा मांशरणा
गतम् ॥ भक्त्यासमर्पयेतुभ्यंप्रथमाव

रणार्चनम् ॥ अनेनप्रथमावरणार्चने
नभगवती श्रीमहा॰ ३ प्रीयताम्
॥१॥पुनः षट्कोणेषुप्रागादिषु ॥ ॐ नं
नन्दजायै॰ १ ॐ रंरक्तदन्तिकायै॰ २
ॐ शांशाकंभर्यै॰ ३ ॐ दुंदुर्गायै॰ ४
ॐ भीं भीमायै॰ ५ ॐ भ्रांभ्रामर्यै॰ ६
दयाऽघेत्राहि॰ ॥२॥ षट्कोणाद्वहिरा

ग्नेयादिचतुर्भागेषु ॐ जंजयायै० १
ॐ विंविजयायै० २ ॐ जंजयंत्यै० ३
ॐअंअपराजितायै०४षट्कोणपार्श्व
योःदक्षिणभागेॐसिंह्राय०५उत्तरभा
गे ॐ महिषाय० ६ दयाब्धे० तृती
यावरणार्चनं अनेन० ॥ ३ ॥ अष्टप
त्रेषु प्रागादिषु ॐ ब्रांब्राह्म्यै ९ १ ॐ

मांमाहेश्वर्यै० २ ॐ कौंकौमार्यै० ३
ॐ वैंवैष्णव्यै० ४ ॐ वांवाराह्यै० ५
ॐ नांनारासिंह्यै० ६ ॐ ऐं ऐन्द्र्यै० ७
ॐ चांचामुण्डायै० ८ दयाब्धे० चतु
र्थावरणार्चनं अनेन० ॥ ४ ॥पुनरष्टदले
षुप्रागादिषु ॐ अंअसिताङ्गभैरवाय०
१ ॐरुंरुरुभैरवाय० २ ॐचंचण्डभै

रवाय० ३ ॐ क्रौंक्रोधभैरवाय० ४ ॐ
उंउन्मत्तभैरवाय० ५ ॐकंकपालभैर
वाय० ६ॐभींभीषणभैरवाय० ७ ॐ
संसंहारभै० ८ दयाब्धे० पंचमावरणा
र्चनं अनेन० ॥ ५ ॥ चतुर्विंशति
दलेषुप्रागादि क्रमेण ॐ विष्णुमा
यायै० १ ॐ चेतनायै० एवम्प्रणवः

सर्वंत्रादौ २ बुद्ध्यै० ३ निद्रायै० ४
क्षुधायै० ५ छायायै० ६ शक्त्यै०
७ तृष्णायै० ८ क्षांत्यै० ९ जात्यै०
१० लज्जायै० ११ शान्त्यै १२
श्रद्धायै० १३ कान्त्यै० १४ ल
क्ष्म्यै० १५ धृत्यै० १६ वृत्यै १७
स्मृत्यै० १८ दयायै० १९ तुष्टयै०

२० पुष्ट्यै० २१ मात्रे० २२ भ्रा
न्त्यै० २३ चिन्त्यै० २४ दयाब्धे०
षष्ठाख्यावरणार्चनं अनेन० ॥६॥ भूगृ
हस्युदयप्रागादिषुॐ लं इन्द्राय० रंअ
ग्नये मंयमाये० क्षंनिर्ऋतयेवंवरुण।०
यंबायवे ०संसोमाय०हंरुद्राय०ईशानी
प्रागन्तराले ॐ आंब्रह्मणे० वरुणानि

ऋंत्यन्तरालेह्रींशेषाय १० दयाब्धे० सप्तमावरणार्चनं० अनेन० ॥७॥ पुनस्तेनैवक्रमेण वंवज्राय० शंशक्त्यै० दंदण्डाय०खंखड्गाय० पांपाशाय० अंअङ्कुशाय० गंगदायै० त्रिंत्रिशूलाय० पंपद्माय० चंचक्राय० १०दयाब्धे० अष्टमावरणार्चनं० अनेन॥८॥ भूगृहाद्बहिः

प्रागादिदिक्षु ॐ गंगणपतये० क्षेंक्षेत्रपा
लाय० बंबटुकाय० योंयोगिनीभ्योन
मः० दयाब्धे० नवमावरणार्चनं अनेन०
॥ ९ ॥ ॐ आवरणदेवताभ्योनमः
चंदनं० इत्यादिपंचोपचारपूजा ॥ ततः
मलमुच्चार्य श्रीमहा० ३ धूपं, दीपं, नैवे
द्यं, तांबूलं, दक्षिणां, फलानि, महानी

रांजनदीपं०, कर्पूरदीपं, नमस्कारान्प्र
दक्षिणाःमंत्रपुष्पं, अपराधसहस्राणि
क्रियतेऽहर्निशंमया ॥ दासोयमितिमां
मत्वाक्षमस्वपरमेश्वरि ॥ १ ॥ आवाह
नंन जानामिनजानामिविसर्जनम् ॥
पूजांचैवनजानामिक्षम्यतांपरमेश्वरि॥
मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि २

यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे ३॥
अपराधशतंकृत्वाजगदम्बेतिचोच्चरेत् ॥
यां गतिंसमवाप्नोतिनतां ब्रह्मादयः
सुराः ॥ ४ ॥ सापराधोऽस्मिशरणं
प्राप्तस्त्वांजगदम्बिके। इदानीमनुकं
प्योहंयथेच्छसितथाकुरु ॥ ५ ॥ अ
ज्ञानाद्विस्मृतेर्भ्रान्त्यायन्न्यूनमाधिकं

क्तम् ॥ तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ ६ ॥ कामेश्वरी जगन्मातः सच्चिदानन्दविग्रहे ॥ गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥७॥ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् सिद्धिर्भवतु मे देवि त्वत्प्रसादात्सुरेश्वरि ॥ ८ ॥ प्रार्थना० ॥ गीतवाद्यनृत्यछ

त्रचामरांदोलनदर्पणासर्वराजोपचारा
र्थे अक्षतान्० नमस्करोमि ॥ अनेन
यथाशक्त्यर्चनेन भगवती श्रीजग
दम्बा० ३ प्रीयताम् । शक्तिभ्योनमः
सर्वोपचारार्थेगन्धाक्ष० ॥ अथकुमा
रीपूजा ॥ यजमानः पूजयेच्चकन्या
नांनवकंशुभम् । द्विवर्षाद्याद्दशाब्दा

न्ताः कुमारीः परिपूजयेत् ॥ १ ॥
अर्थादेकहायनाल्पवयस्कावर्ज्याः ॥
तान्त्रासनेउपवेश्यावाहयेन्मन्त्रेण ॥
मन्त्राक्षरमयींलक्ष्मींमातृणांरूपधा
रिणीम् ॥ नवदुर्गात्मिकां साक्षात्क
न्यामावाहयाम्यहम् ॥१॥ अनेनैवम
न्त्रेणनवापि आवाहयेत ॥ अशक्तौ

यथाशक्तिएकामपि ॥ अथनवानां
पूजामंत्राः द्विहायनाकुमारीसंज्ञका ॥
सर्वस्वरूपेसर्वेशेसर्वशक्तिस्वरूपिणि॥
पूजांगृहाणकौमारि जगन्मातर्नमो
स्तुते ॥ २ ॥ त्रिहायनात्रिमूर्तिस्तन्म
न्त्रः ॥ त्रिपुरांत्रिपुराधारां त्रिवर्षां
ज्ञानरूपिणी । त्रैलोक्यवन्दितां दे

वींत्रिमूर्तिंपूजयाम्यहम् ॥ ३ ॥ चतु
र्वर्षांकल्याणीतत्पूजामंत्रः। कलात्मि
कां कलातीतां तारुण्यहृदयाशिवाम्॥
काल्याणजननीं देवीं कल्याणीं पूज
याम्यहम् ॥ ४ ॥ पञ्चवर्षारोहिणी
तत्पूजामन्त्रः॥ अणिमादिगुणाधारा
मकाराद्यक्षरात्मिकाम् ॥ अनन्तश

क्तिकांलक्ष्मीं रोहिणीं पूजयाम्यहम्
॥ ५ ॥ षड्वर्षाकालिकातत्पूजामं
त्रः ॥ कामचारांशुभांकान्तां कालच
क्रस्वरूपिणीम् ॥ कामदांकरुणोदारां
कालिकांपूजयाम्यहम् ॥ ६ ॥ सप्तव
र्षा चंडिकातत्पूजामंत्रः ॥ चण्डवी
रां चण्डमायां चण्डमुण्डप्रभञ्जनी

म् । पूजयामिसदादेवीं चण्डिकांच
ण्डविक्रमाम् ॥ ७ ॥ अष्टवर्षाशाम्भ
वीतत्पूजामंन्त्रः ॥ सदानन्दकरींशा
न्तांसर्वदेवनमस्कृताम् ॥ सर्वभूतात्मि
कांलक्ष्मींशांभवींपूजयाम्यहम् ॥ ८ ॥
नवहायनादुर्गा तत्पूजामन्त्रः ॥ दुर्गमे
दुस्तरेकार्यें भवदुःखविनाशिनीम् ॥

पूजयामिसदाभक्त्यादुर्गां दुर्गार्तिना
शिनीम् ॥ ९ ॥ दशवर्षासुभद्रा तत्पू
जामन्त्रः ॥ सुन्दरींस्वर्णवर्णाभांसुख
सौभाग्यदायिनीम् ॥ सुभद्रजननीं
देवींसुभद्रांपूजयाम्यहम् ॥ १० ॥ इ
तिप्रत्येकंमन्त्रान्तेतत्तन्नाममन्त्रेणान
वापिषोडशोपचारैः पंचोपचारैर्वापूज

येत् इति ॥

अथबलिदानम् ॥ मूलान्तेश्रीमहाल
क्ष्म्यैनमः पायसबलिंसमर्पयामि इति
महाकाल्यादियोगिन्यन्तयन्त्रस्थावर
णदेवताभ्यः प्रत्येकंसर्वाभ्योबलिं द
द्यात् ॥ अथकूष्माण्डबलिविधान
म् ॥ आचम्य प्राणानायम्यदेशाद्यु

च्चार्य्यं मम सकुटुम्बस्यसर्वारिष्टप्रशा
न्तिसर्वाभीष्टासिद्धिकल्पोक्तफलावाप्ति
द्वाराश्रीमहाका० ३ तीदेवताप्रीत्यर्थं
कूष्माण्डबलिदानंकरिष्ये तदङ्गत्वेन
पञ्चोपचारैःपूजनंबलिदानंकरिष्ये ॥
मूलेनमुख्यदेवतांपञ्चोपचारैः संपू
ज्यतत्पुरतः स्वयमुदङ्मुखोबलिंप्राङ्

मुखं पीठेवस्त्रगुण्ठितंकुष्माण्डंनिधाय
ॐ कुष्माण्डबलयेनमः इति आ
वाहनवस्त्रगन्धादिभिः संपूज्यअभि
मन्त्रयेत् ॥ पशुस्त्वंबलिरूपेणमम
भाग्यादवस्थितः ॥ प्रणमामिततःस
र्वरूपिणंबलिरूपिणम् ॥ १ ॥ चण्डि
काप्रीतिदानेनदातुरापद्विनाशनम् ॥

चामुण्डाबलिरूपायबलेतुभ्यंनमोऽस्तु
ते ॥ २ ॥ यज्ञार्थबलयः सृष्टाः स्वय
मेवस्वयम्भुवा ॥ अतस्त्वांघातयाम्य
द्ययस्माद्यज्ञेमतोवधः ॥ इति ॥ ततः
शस्त्रंगन्धादिनासंपूज्यअभिमन्त्रयेत्
ऐंह्रीं श्रींसरनात्वंचाण्डिकायाः सुर
लोकप्रसाधकः ॥ इति ह्रां ह्रीं खड्ग

आंहुंफट् इतिहस्तेशस्त्रंगृहीत्वा
ॐ कालिकालिवज्रेश्वरिलोहदण्डायै
नमः इति पठन्छित्त्वाछेदनावसरेनावि
लोकयेत् ॥ कौशिकिरुधिरेणाप्याय
तामिति देव्यैअर्घ्यंनिवेद्य अवशिष्टार्घं
स्यपञ्चभागान्कृत्वा पुतनायै बलिभा
गंनिवेदयामि चरक्यैबलिं० विदायै

ब० पापराक्षस्यैब० ततोमाषापिष्टपशुं
शत्रुं शस्त्रेणाछित्वास्कन्दायपशवर्धं
समर्पयामि विशिखायपशवर्धंस० इति
समर्प्य शेषंरक्षोभ्योहरेत् २ मन्त्रा
स्तु ॐ ह्रींस्फुरस्फुर ॐ फ्रीं ॐ हुंफट्
मर्दमर्दहुंइति ॥ तच्छेषंबहिर्दद्यात् ॥
बलिंगृह्णांत्विमंदेवा आदित्यावसव

स्तथा ॥ मरुतश्चास्विनौरुद्राः सुप
र्णाः पन्नगाग्रहाः ॥ असुरायातुधाना
श्चापिशाचोरगराक्षसाः ॥ डाकिन्यो
यक्षवेतालायोगिन्यःपूतनाःशिवाः ॥
जम्भकाः सिद्धगन्धर्वाः साध्या विद्या
धरानगाः ॥ दिक्पालालोकपालाश्च
येचविघ्नविनायकाः ॥ जगतांशान्ति

कर्तारोब्रह्माद्याश्चमहर्षयः। माविघ्नं
माचमेपापंमासंतुपरिपन्थिनः॥ सौ
म्याभवन्तु तृप्तास्तेभूतप्रेताः सुखाव
हाः॥ भूतानि यानीहवसान्तितानि
बलिंगृहीत्वा बिधिवत्प्रयुक्तम्॥ अ
न्यत्र वासंपरिकल्पयन्तुरक्षन्तुमांता
निसदैवचात्रेति॥ ततः स्नात्वा कृत

तिलकोदेवींप्रार्थयेत् खड्गिनीशू० ५
शूलेनपा० ४ सर्वस्वरूपे० ५ रूपं
देहिजयंदेहिभगं भगवतिदेहिमे ॥
पुत्रान्देहिधनंदेहिसर्वान् कामांश्चदे
हिमे ॥ महिषघ्निमहामायेचामुण्डे
मुण्डमालिनि ॥ आयुरारोग्यमैश्वर्यं
देहिदेविनमोस्तुते ॥ इतिप्रार्थयेत् ॥

एतद्बलिदानंहोमाङ्गं तच्चहोमो

त्तरमेव ॥ पूजाङ्गत्वैकल्पिकम् ॥ तत्र

चपायसबलिदानमवश्यमेवेतिबलिदा

नविधिः ॥ अथ सरस्वतीपूजनम् ॐ

नमः पिशाचनिकरंकिनित्रिशूलखड्ग

हस्तेसिंहारूढेएह्येहिआगच्छ आग

च्छइमांपूजांगृहाणस्वाहा श्रीसप्तश

ती सरस्वत्यैनमआवाहयामि तत ॐ
ह्रींचंडिकायै नमः इतिमन्त्रेणषोड
शोपचारैः पूजयेदिति ॥ अथ शापो
द्धारमन्त्रः ॥ ॐ ह्रींक्लींश्रींक्रांक्रीं च
ण्डिकेदेविशापानुग्रहंकुरुकुरुस्वाहा ७
वारंजपेत ततउत्कीलनमंत्रः ॐ श्रीं
क्लींह्रींसप्तशतिचंडिके उत्कीलनंकु

नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्ति
ताः ॥ उक्तान्येतानि नामानि ब्रह्मणैव
महात्मना ॥ ५ ॥ अग्निनादह्यमा
नस्तु शत्रुमध्ये गतो रणे ॥ विषमे दुर्गमे
चैव भयार्ताः शरणंगताः ॥ ६ ॥
न तेषां जायते किंचिदशुभं रणसङ्कटे ॥
नापदं तस्य पश्यामि शोकदुःखभयं

नहि ॥ ७ ॥ यैस्तुभक्त्यास्मृ
तानूनंतेषांसिद्धिः प्रजायते ॥ प्रेतसं
स्थातु चामुण्डा वाराहीमहिषासना
॥ ८ ॥ ऐन्द्रीगजसमारूढावैष्णवी
गरुडासना ॥ माहेश्वरी वृषारूढाकौ
मारी शिखिवाहना ॥ ९ ॥ ब्राह्मी हं
ससमारूढा सर्वाभरण भूषिता ॥ ल

क्ष्मीपद्मासनादेवी पद्महस्ताहरिप्रिया
॥ १० ॥ श्वेतरूपधरादेवी ईश्वरीवृष
वाहना ॥ इत्येतामातरोदेव्याः सर्व
रोगसमन्विताः ॥ ११ ॥ नानाभरण
शोभाढ्या नानारत्नोपशोभिताः ॥
श्रेष्ठैश्चमौक्तिकैः सर्वादिव्यहारप्रलं
बिभिः ॥ १२ ॥ इन्द्रनीलैः महानी

लैःपद्मरागैः सुशोभनैः ॥ दृश्यन्ते रथमारूठा देव्यःक्रोधसमा कुलाः ॥ १३ ॥ शङ्खंचक्रं गदां शक्तिंहलं च मुसलायुधम् ॥ खेटकंतोमरंचैवप रशुंपाशमेव च ॥ १४ ॥ कुन्तायुधं त्रिशूलं च शार्ङ्गायुधमनुत्तमम् ॥ चर्म खड्गंचशक्तिंचपट्टिशंमुद्गरंतथा १५

दैत्यानांदेहनाशायभक्तानामभयायच
धारयन्त्यायुधानीत्थंदेवानां चाहिता
य वै ॥ १६ ॥ नमस्तेतुमहारौद्रेमहा
घोरपराक्रमे ॥ महाबलेमहोत्साहे
महाभयविनाशिनि ॥१७॥ त्राहिमां
देविदुष्प्रेक्ष्येशत्रूणांभयवर्धिनि ॥ प्रा
च्यांरक्षतुमामैन्द्री आग्नेय्यामग्निदेव

ता ॥१८॥ दक्षिणेरक्षवाराहीनैर्ऋत्यां
खड्गधारिणी ॥ प्रतीच्यांवारुणीरक्षे
द्वायव्यांमृगवाहिनी ॥१९॥ उदीच्यां
रक्षकौवेरीईशान्यांशूलधारिणी ॥ ऊ
र्ध्वंब्रह्माणी मेरक्षेदधस्ताद्वैष्णवीत
था॥२०॥ एवंदशदिशोरक्षेच्चामुण्डा
शववाहना ॥ जयामे चाग्रतः स्था

तुविजयास्थातुपृष्ठतः ॥ २१ ॥ अजि
तावामपार्श्वेतुदक्षिणेचापराजिता ॥
शिखांमेद्योतिनी रक्षेदुमामूर्ध्निव्यव
स्थिता ॥ २२ ॥ मालाधरीललाटेच
भ्रुवौरक्षेद्यशस्विनी ॥ त्रिनेत्राचभ्रुवो
र्मध्येयमघण्टाचनासिके ॥ २३ ॥ शं
खिनी चक्षुषोर्मध्ये श्रोत्रयोर्द्वारवासि

नी ॥ कपोलौ कालिका रक्षेत्कर्णमूले
तु शाङ्करी ॥ २४ ॥ नासिकायां सुग
न्धा च उत्तरोष्ठे च चर्चिका ॥ अधरे
चामृतकला जिह्वायां च सरस्वती॥ २५॥
दन्तान्रक्षतु कौमारी कण्ठमध्ये तु च
ण्डिका ॥ घण्टिकां चित्रघण्टा च म
हामाया च तालुके ॥ २६ ॥ कामा

क्षीचिबुकंरक्षेद्वाचंमेसर्वमङ्गला॥ ग्री
वायां भद्रकालीचपृष्ठवंशेधनुर्धरी ॥
॥ २७ ॥नीलग्रीवाबहिः कण्ठेन
लिकांनलकूबरी ॥ खड्गधारिण्यु
भौस्कन्धौबाहूमेवज्रधारिणी ॥ २८ ॥
हस्तयोर्दण्डिनीरक्षेदम्बिका चाङ्गु
लीस्तथा ॥ नखाञ्छूलेश्वरीरक्षेत्कु

क्षौरक्षेन्नलेश्वरी ॥ २९ ॥ स्तनौरक्षे
न्महादेवीमनश्शोकविनाशिनी ॥ हृद
येललितादेवीउदरेसिंहवाहिनी ॥३०॥
नाभिंचकामिनीरक्षेद्गुह्यगुह्येश्वरीतथा
कटिंभगवतीरक्षेज्जानुनीविन्ध्यवासि
नी ॥३१॥ पूतनाकामिकामेढ्रं ऊरूमे
मेघवाहिनी ॥ जंघे महाबलाप्रोक्ता

जानुमध्येविनायकी ॥ ३२ ॥ गुल्फ
योर्नारसिंहीच पादपृष्ठेमितौजसी ॥
पादाङ्गुलीः श्रीधरीचपादाधस्तलवा
सिनी ॥ ३३ ॥ दंष्ट्राः करालिनीरक्षेत्
केशांश्चैवोर्ध्वकेशिनी ॥ रोमकूपेषुकौ
बेरीत्वचंवागीश्वरीतथा ॥ ३४ ॥ रक्तम
ज्जावसामांसान्यस्थिमेदांसिपार्वती ॥

अन्त्राणिकालरात्रिश्च पित्तंचमुकुटे
श्वरी ॥ ३५ ॥ पद्मावतीपद्मकोशेकफे
चूडामणिस्तथा ॥ ज्वालामुखीनख
ज्वालामभेद्यासर्वसंधिषु ॥ ३६ ॥ शुक्रं
ब्रह्माणिमेरक्षेच्छायांछत्रेश्वरीतथा ॥
अहंकारंमनोबुद्धिंरक्षमे धर्मचारिणी
॥ ३७ ॥ प्राणापानौतथाव्यानमुदा

नचसमानकम्। वज्रहस्ताचमेरक्षेत्पा
णींकल्याणशोभना ॥ ३८ ॥ रसंरूपं
चगन्धं च शब्दंस्पर्शंचयोगिनी ॥
सत्वंरजस्तमश्चैव ॥ रक्षेन्नारायणी
तथा ॥ ३९ ॥ आयुर्मेरक्षवाराहीधर्मं
रक्षतुवैष्णवी ॥ यशःकीर्तिंचलक्ष्मीं
च सदारक्षंतुमातरः ॥ ४० ॥ गोत्रमि

न्द्राणिमेरक्षेत्पशून्मेरक्ष चण्डिके ॥
पुत्रान्रक्षेन्महालक्ष्मीभार्यां रक्षतुभै
रवी ॥४१॥ धनंधनेश्वरीरक्षेत्कौमारी
कन्यकास्तथा ॥ मार्गंक्षेमकरीरक्षे
द्विजयासर्वतः स्थिता ॥४२॥ राजद्वारे
महालक्ष्मीःसंग्रामेजयवर्धिनी ॥ रक्षा
हीनंतुयत्स्थानंवर्जितंकवचेनतु ॥४३॥

तत्सर्वं रक्षमे देवि जयन्ती पापनाशि
नी ॥ रक्षमे सर्वगात्राणि दुर्गे दुर्गार्तिहा
रिणी ॥४४॥ इदं रहस्यं विप्रर्षे भक्त्या
तवमयोदितम् । सर्वरक्षाकरं पुण्यं कव
चं सर्वदा जपेत् ॥४५॥ पदमेकं नगच्छे
त्तुयदीच्छेच्छुभमात्मनः । कवचेना
वृतोनित्यं यत्रयत्रहिगच्छति ॥४६॥

तत्रतत्रार्थलाभश्च विजयःसर्वकामि
कः ॥ यंयंचिन्तयतेकामं तंतंप्राप्नो
तिनिश्चितम् ॥ ४७ ॥ परमैश्वर्यमतु
लंलभतेभूतलेपुमान् ॥ निर्भयोजाय
तेमर्त्यः सङ्ग्रामेष्वपराजितः ॥ ४८ ॥
त्रैलोक्येतुभवेत्पूज्यः कवचेनावृतः
पुमान् ॥ इदन्तुदेव्याः कवचंदेवाना

मपिदुर्लभम् ॥ ४९ ॥ यःपठेत्प्रातरु
त्थायात्रिसन्ध्यंश्रद्धयान्वितः॥ दैवी
कलाभवेत्तस्यत्रैलोक्ये चापराजितः
॥ ५० ॥ जीवेद्वर्षशतंसाग्रमपमृत्यु
विवर्जितः ॥ नश्यन्तिव्याधयः सर्वे
लूताविस्फोटकादयः ॥ ५१ ॥ स्थावरं
जङ्गमंवापिकृत्रिमंचापियद्विषम् ॥ अ

भिचाराणि सर्वाणिमन्त्रयन्त्राणिभू
तले ॥५२॥ भूचराः खेचराश्चैवजल
जाश्चोपदेशिकाः ॥ सहजाः कुलजा
माला डाकिनीशाकिनी तथा ॥५३॥
गुह्यंरक्षातिचाघोरा शाकिनी चमहाब
ला ॥ अन्तरिक्षचराघोरा डाकिन्यश्च
महाबलाः ॥ ५४ ॥ ग्रहभूतपिशाचा

श्वयक्षगन्धर्वराक्षसाः ॥ ब्रह्मराक्षस
वेतालाः कूष्माण्डाभैरवादयः ॥५५॥
नश्यन्तिदर्शनात्तस्य कवचे हृदिसं
स्थिते ॥ मानोन्नतिर्भवेद्राज्ञस्तेजो
वृद्धिकरंपरम् ॥ ५६ ॥ यशसावर्धते
सोऽपिकीर्तिमण्डितभूतले ॥ जपेत्स
प्तशतींचण्डींकृत्वाकवचमग्रतः।५७॥

निर्विघ्नेनभवेत्सिद्धिश्चण्डी जपसमु
द्भवा ॥ यावत्कूर्मोधरांधत्तेसशैलवन
काननाम् ॥ ५८ ॥ तावत्तिष्ठतिमेदि
न्यांसन्ततिः पुत्रपौत्रिका ॥ देहान्ते
परमंस्थानंयत्सुरैरपिदुर्लभम्. ॥५९॥
प्राप्नोतिपुरुषोनित्यंमहामाया प्रसाद
तः ॥ तस्माज्जपेत्सदाभक्त्याकवचं

कामदंमुने ॥ ६० ॥ नित्यंयः स्मर
तेतस्यरोगानश्यन्तिदूरतः ॥ इति
श्रीवाराहपुराणेहरिहरब्रह्मविरचितंदे
व्याः कवचं सम्पूर्णम् ॥ १ ॥

॥ श्रीजगदम्बार्पणमस्तु ॥

अस्य श्रीअर्गलास्तोत्रमन्त्रस्य वि
ष्णुऋषिः अनुष्टप्छन्दः श्रीमहाल

क्ष्मीदेवता श्रीजगदम्बाप्रीतयेसप्तश
तीपाठाङ्गजपेविनियोगः ॥ ॐनमश्च
ण्डिकायै ॥ जयन्तीमङ्गलाकालीभद्र
कालीकपालिनी ॥ दुर्गाक्षमाशिवाधा
त्रीस्वाहास्वधानमोस्तुते ॥१॥ मधुकैट
भविद्राविविधातृवरदेनमः ॥ रूपंदेहि
जयंदेहियशोदेहिद्विषोजहि ॥२॥ महि

षासुरनिर्णाशि विधातृवरदेनमः ॥रूपं
देहिजयंदेहियशोदेहिद्विषोजहि ॥३॥
रक्तबीजवधेदेवि चण्डमुण्डविनाशि
नि ॥ रूपंदेहिजयंदेहियशोदेहिद्विषो
जहि ॥ ४ ॥ निशुंभमथनेदेविशुंभा
सुरनिवर्हिणि ॥ रूपंदेहिजयंदेहियशो
देहिद्विषोजहि ॥ ५ ॥ वन्दिताङ्घ्रि

युगेदेवैर्देविसौभाग्यदायिनि ॥ रूपंदे
हिजयंदेहियशोदेहि द्विषोजहि॥६॥अ
चिन्त्यरूपचरितेसर्वशत्रुविनाशिनि॥
रूपंदेहिजयंदेहियशोदेहिद्विषोजहि॥
॥७॥ नतेभ्यः सर्वदाभक्त्याचण्डिके
दुरितापहे ॥ रूपंदेहिजयंदेहियशोदे
हिद्विषोजहि ॥ ८ ॥ चण्डिकेसततंये

इतिभगवत्याः कीलकस्तोत्रम् ॥ ३ ॥

ॐ अस्यश्रीनवार्णमन्त्रस्य ब्रह्म
विष्णुरुद्राऋषयः गायत्र्युष्णिगा
नुष्टुप्छन्दांसि श्रीमहाकालीमहा
लक्ष्मीमहासरस्वत्यो देवताः दन्दा
शाकम्भरीभीमाशक्तयः रक्तदन्ति
कादुर्गाभ्रामर्यौबीजानि अग्निवायु

सूर्यास्तत्वानि श्रीमहाकालीमहा
लक्ष्मीमहासरस्वतीप्रीत्यर्थं जपेविनि
योगः ॥ ब्रह्मविष्णुरुद्रऋषिभ्योनमः
शिरसि ॥ गायत्र्युष्णिगनुष्टुप्छन्दो
भ्योनमः मुखे ॥ श्रीमहाकालीमहा
लक्ष्मीमहासरस्वतीदेवताभ्यो नमः
हृदि ॥ नन्दाशाकम्भरीभीमाशक्ति

भ्योनमोदक्षिणास्तने ॥ रक्तदन्तिका
दुर्गाभ्रामरीबीजेभ्यो नमोवामस्तने ॥
अग्निवायुसूर्यतत्त्वेभ्योनमोनाभौ ॥
इतिऋष्यादिन्यासः ॥ मूलेनकरौ
संशोध्य ॥ अथैकादशन्यासाः ॥
तत्रादौमातृकान्यासः ॥ सर्वत्रादौप्रण
वोच्चारःअंनमोललाटे॥आंनमोमुख

वृत्ते ॥ इंनमोदक्षिणनेत्रे ॥ ईंनमोवाम
नेत्रे ॥ उंनमोदक्षिणकर्णे ॥ ऊंनमो
वामकर्णे ॥ ऋंनमोदक्षिणनासि ॥
ॠंनमोवामनासि ॥ लृंनमोदक्षिणगण्डे
ॡंनमोवामगण्डे ॥ एंनमऊर्ध्वोष्ठे ॥
ऐंनमोऽधरोष्ठे ओंनमऊर्ध्वदन्तपङ्क्तौ
औंनमोऽधोदन्तपङ्क्तौ ॥ अंनमःशिरसि

॥ अःनमोमुखे ॥ कंनमोदक्षबाहूमूले खंनमोदक्षकूर्परे ॥ गंनमो दक्षमणि बन्धे ॥ घंनमोदक्षाङ्गुलिमूले ॥ ङंनमोदक्षाङ्गुल्यग्रे ॥ चंनमोवाम बाहुमूले ॥ छंनमोवामकूर्परे ॥ जंन मो वाममणिबन्धे ॥ झंनमो वामा ङ्गुलिमूले ॥ ञंनमो वामाङ्गुल्यग्रे

॥ टंनमोदक्षपादमूले । ठंनमो दक्ष
जानुनि ॥ डंनमोदक्षगुल्फे ॥ ढंनमो
दक्षपादाङ्गुलिमूले ॥ णंनमोदक्ष
पादाङ्गुल्यग्रे ॥ तंनमोवामपादमूले ॥
थंनमोवामजानुनि ॥ दंनमोवामगु
ल्फे ॥ धंनमोवामपादाङ्गुलिमूले ॥
नंनमोवामपादांगुल्यग्रे ॥ पंनमोदक्ष

पार्श्वे ॥ फंनमोवामपार्श्वे ॥ बंनमःपृ
ष्ठे ॥ भंनमोनाभौ ॥ मंनमोजठरे ॥
यंनमोहृदि ॥ रंनमोदक्षांसे ॥ लंनमः
ककुदि ॥ वंनमो वामांसे ॥ शंनमो
हृदयादिदक्षहस्तान्ते ॥ षंनमोहृदा
दिवामहस्तान्ते ॥ संनमोहृदादिदक्ष
पादान्ते ॥ हंनमोहृदादिवामपादान्ते

॥ लंनमोजठरे ॥ क्षंनमोमुखे ॥ इ
तिमातृकान्यासोदेवसारूप्यप्रदः प्रथ
मः ॥ १ ॥ ऐंह्रींक्लींनमःकनिष्ठिकयोः
॥ ऐंह्रींक्लींनमोऽनामिकयोः ॥ ऐं
ह्रींक्लींनमोमध्यमयोः ॥ ऐंह्रींक्लीं
नमस्तर्जन्योः ॥ ऐंह्रींक्लींनमोङ्गुष्ठ
योः ॥ ऐंह्रींक्लींनमः करमध्ये ॥ ऐं

ह्रींक्लींनमःकरपृष्ठे ॥ ऐंह्रींक्लींनमो
मणिबन्धयोः ॥ ऐंह्रींक्लींनमः कूर्प
रयोः ॥ ऐंह्रींक्लींनमोहृदयायनमः ॥
ऐंह्रींक्लींनमः शिरसेस्वाहा ॥ ऐंह्रीं
क्लींनमः शिखायैवषट्।ऐंह्रींक्लींनमः
कवचायहुं ॥ ऐंह्रींक्लींनमो नेत्रत्रया
यवौषट् ॥ ऐंह्रींक्लींनमोऽस्त्रायफट् ॥

॥ इति सारस्वतोजाड्यविनाशको द्वितीयः ॥२॥ ह्रींब्राह्मीपूर्वस्यांमांपातु ॥ ह्रींमाहेश्वरी आग्नेय्यांमांपातु ॥ ह्रींकौमारी दक्षिणास्यांमांपातु ॥ ह्रीं वैष्णवीनैर्ऋत्यांमांपातु ॥ ह्रींवाराही पश्चिमायांमांपातु ॥ ह्रींइन्द्राणीवायव्यांमांपातु ॥ ह्रींचामुण्डाउत्तरस्यां

मांपातु ॥ ह्रीं महालक्ष्मीऐशान्यां
मांपातु। ह्रींव्योमेश्वरी ऊर्ध्वमां पातु॥
ह्रींसप्तद्वीपेश्वरीभूमौमांपातु॥ ह्रींका
मेश्वरीपातालेमांपातु ॥ इतिमातृग
णन्यासस्त्रैलोक्यविजयप्रदस्तृतीयः॥
॥ ३ ॥ कमलाङ्कुशमण्डितानन्द
जापूर्वाङ्गंमेपातु ॥ खड्गपात्रधरारक्त

दन्तिकादक्षिणाङ्गंमेपातु ॥ पुष्पपल्ल
वसंयुताशाकम्भरीपश्चिमाङ्गंमेपातु ॥
धनुर्बाणकरादुर्गावामाङ्गंमेपातु।शिरः
पात्रकराभीमामस्तकाच्चरणावधिमां
पातु । चित्रकांतिभृद्भ्रामरीपादादि
मस्तकान्तंमेपातु ॥ इतिजरामृत्युह
रोनन्दजादिन्यासश्चतुर्थः ॥ ४ ॥ पा

दादिनाभिपर्यन्तंब्रह्मामांपातु ॥ नाभे
र्विंशुद्धिपर्यन्तंजनार्दनोमांपातु ॥ विशु
द्धेर्ब्रह्मरन्ध्रान्तरुद्रोमांपातु ॥ हंसोमेप
दद्वयंपातु ॥ वैनतेयः करद्वयंमेपातु ॥
वृषभश्चक्षुषीमेपातु ॥ गजाननः सर्वा
ङ्गंमेपातु ॥ आनन्दमयोहरिः परा
परौदेहभागौमेपातु ॥ इतिसर्वकाम

प्रदोब्रह्मादिन्यासः पञ्चमः ॥

अष्टादशभुजालक्ष्मीर्मध्यभागंमे पातु ॥ अष्टभुजामहासरस्वतीऊर्ध्वं भागंमेपातु ॥ दशभुजामहाकाली अधोभागंमेपातु ॥ सिंहोहस्तद्वयंमे पातु ॥ परहंसोऽक्षियुगंमेपातु ॥ महिषारूढोयमः पदद्वयंमेपातु ॥ महा

शश्वरिडकायुक्तः सर्वाङ्गंमेपातु॥ इति
महालक्ष्म्यादिन्यासः॥ सद्गतिप्रदः
षष्ठः ॥ ६ ॥ ऐंनमोब्रह्मरन्ध्रे ॥ ह्रींन
मोदक्षिणनेत्रे॥ क्लींनमोवामनेत्रे ॥
चांनमोदक्षिणकर्णे ॥ मुंनमोवाम
कर्णे ॥ डांनमोदक्षिणनासापुटे ॥
यैंनमोवामनासापुटे ॥ विंनमोमुखे ॥

चैंनमोगुह्ये ॥ इतिमूलाक्षरन्यासोरो
गक्षयकरःसप्तमः ॥७॥ च्चैंनमोगुह्ये॥
विंनमोमुखे ॥ यैंनमोवामनासापुटे ॥
डांनमोदक्षिणनासापुटे ॥ मुंनमोवा
मकर्णे ॥ चांनमोदक्षिणकर्णे ॥ क्लीं
नमोवामनेत्रे ॥ ह्रींनमोदक्षनेत्रे ॥ ऐं
नमोब्रह्मरन्ध्रे ॥ इतिविलोमाक्षरन्या

स: ॥ सर्वदुःखनाशकोऽष्टमः ॥ ८ ॥
मूलमुच्चार्य्य ॥ मस्तकाच्चरणान्तं ॥
चरणान्मस्तकान्तमष्टवारंव्यापकं कु
र्यात् ॥ सयथा ॥ प्रथमंपुरतोमूलेनम
स्तकाच्चरणावधि ॥ १ ॥ ततश्चरणान्म
स्तकावधिमूलोच्चारेणव्यापकम् ॥ २ ॥
एवंदक्षिणतः पश्चाद्वामभागेचेति प्र

तिादिग्भागेऽनुलोमविलोमतयाद्विर्द्वि
रितिअष्टवारं व्यापकंभवति ॥ इति
देवताप्राप्तिकरोमूलव्यापकोनवमः ॥
॥ ९ ॥ मूलमुच्चार्य्यहृदयायनमः ॥
एवंप्रत्यङ्गंसर्वमूलमुच्चार्य्यषडङ्गेषुन्य
सेत॥इतिमूलषडङ्गन्यासस्त्रलोकयवशं
करोदशमः ॥ खड्गिनीशूलिनीघोरा

गदिनीचक्रिणीतथा ॥ शंखिनीचापि
नीबाणाभुशुण्डीपरिघायुधा ॥ १ ॥
सौम्या सौम्यतराशेषसौम्येभ्यस्त्वति
सुन्दरी ॥ परापराणांपरमात्वमेवपर
मेश्वरी ॥२॥ यच्चकिञ्चित्क्वचिद्वस्तु
सदसद्वाखिलात्मिके ॥ तस्यसर्वस्य
याशक्तिः सात्वंकिंस्तूयसेतदा ॥ ३ ॥

यथात्वयाजगत्स्त्रष्टा जगत्पात्यत्तियो जगत् ॥ सोपिनिद्रावशंनीतः कस्त्वां स्तोतुमिहेश्वरः ॥ ४ ॥ विष्णुः शरीर ग्रहणामहमीशानएवच ॥ कारितास्ते यतोऽतरत्वांकः स्तोतुंशक्तिमान्भवेत् ॥ ५ ॥ आद्यंबाग्वीजंकृष्णातरंध्यात्वा सर्वाङ्गेविन्यसामि ॥ इतिसर्वाङ्गेन्य

सेत ॥ शूलेनपाहिनो देविपाहि खड्
गेनचाम्बिके । घण्टास्वनेन नः पाहि
चापज्यानिःस्वनेनच ॥१॥ प्राच्यांरक्ष
प्रतीच्यांचचण्डिकेरक्षदक्षिणे॥भ्रामणे
नात्मशूलस्यउत्तरस्यां तथेश्वरि ॥२॥
सौम्यानियानिरूपाणित्रैलोक्ये विच
रन्तिते ॥ यानिचात्यन्तघोराणितैर

क्षास्मास्तथाभुवम् ॥ ३ ॥ खड्गशूल
गदादीनियानिचास्त्राणितेम्बिके ॥
करपल्लवसङ्गीनितैरस्मान्रक्षसर्वतः
॥ ४ ॥ द्वितीयंमायाबीजं सूर्यसदृशं
ध्यात्व सर्वाङ्गेविन्यसेत् ॥ सर्वस्व
रूपेसर्वेशेसर्वशक्तिसमन्विते ॥ भये
भ्यस्त्राहिनोदेवि दुर्गेदेविनमोस्तुते।१।

एतत्तेवदनं सौम्यं लोचनत्रयभूषित
म् ॥ पातुनः सर्वभूतेभ्यः कात्याय
निनमोस्तुते ॥ २ ॥ ज्वालाकराल
मत्युग्रमशेषासुरसूदनम् ॥ त्रिशूलं
पातुनो भीतेर्भद्रकालिनमोस्तुते ॥३॥
हिनास्ति दैत्यतेजांसिस्वनेनापूर्ययाज
गत् ॥ साघंटापातुनो देविपपेटाम्यो

न: सुतानिव ॥ ४ ॥ असुरासृग्वसा
पङ्कचर्चितस्ते करोज्ज्वलः ॥ शुभाय
खड्गोभवतुचण्डिकेत्वांनतावयम्।५।
तृतीयंकामबीजं स्फटिकाभंध्यात्वा
सर्वाङ्गेविन्यसेत ॥ इतिसूक्तादिवी
जत्रयन्यासः पञ्चमः ॥ सर्वानिष्टह
रःसर्वाभीष्टदः सर्वरक्षाकरश्चैकादशः

॥ ११ ॥ अथमूलषडंगन्यासः ॥ ॐ
ऐंअंगुष्ठाभ्यांनमः ॥ ॐह्रीं तर्जनीभ्यां
नमः ॥ ॐ क्लींमध्यमाभ्यांनमः ॥
ॐचामुण्डायैअनामिकाभ्यांनमः।ॐ
विच्चेकनिष्ठिकाभ्यांनमःॐ ऐंह्रींक्लीं
चामुंडायैविच्चे करतलकरपृष्ठाभ्यांन
मः ॥ एवंहृदयादि ॥ ततोऽक्षरन्या

सः ॐ ऐंनमः शिखायां ॥ ॐ ह्रींन
मो दक्षिण नेत्रे ॥ क्लींनमो वामने
त्रे॥ॐ चांनमो दक्षिणकर्णे ॥ॐ मुंन
मो वामकर्णेॐ डांनमो दक्षिणनासा
यां ॥ ॐ यैंनमो वामनासायां ॥ ॐ
विंनमोः मुखे ॥ ॐ च्चेनमो गुह्ये ॥
एवंविन्यस्याष्टवारं मूलेनव्यापकंकु

यांत्र ॥ अथाङ्गन्यासः ॥ ॐ ऐंप्रा
च्यैनमः ॥ ॐ ऐंआग्नेय्यैनमः ॐ
ह्रींदाक्षिणायैनमः॥ॐ ह्रींनैर्ऋत्यैनमः॥
ॐक्लींप्रतीच्यैनमःॐ क्लींवायव्यैन
मः॥ॐ चामुण्डायै उदीच्यैनमः॥ॐ
विच्चेईशान्यैनमः ॐ ऐंह्रींक्लीं चा
मुण्डायैविच्चे ऊर्ध्वायैनमः ॥ ॐ

ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै
नमः ॥ अथध्यानम् ॥ खड्गंचक्रग
देषुचाप परिघाञ्छूलंभुशुण्डींशिरः
शंखंसंदधतींकरैस्त्रिनयनां सर्वाङ्गभू
षावृताम् ॥ नीलाश्मद्युतिमास्यपादद
शकांसेवेमहाकालिकां यामस्तौत्स्वापि
तेहरौकमलजोहन्तुंमधुंकैटभम् ॥ १ ॥

अक्षस्रक्परशुंगदेषु कुलिशंपद्मंध
नुः कुण्डिकां दण्डं शक्तिमसिंचच
र्मजलजंघण्टा सुराभाजनम् ॥ शूलं
पाशसुदर्शनेच दधतींहस्तैः प्रवालप्र
भांसेवेसैरिभमर्दिनीमिह महालक्ष्मीं
सरोजास्थिताम् ॥२॥ घण्टाशूलहला
निशंखमुसलेचक्रंधनुः सायकंहस्ता

ब्जैर्दधतींघनान्त विलसच्छीतांशुतु
ल्यप्रभाम् ॥ गौरीदेहसमुद्भवां त्रिज
गतामाधारभूतां महापूर्वामत्रसरस्व
तीमनुभजेशुम्भादिदैत्यार्दिनीम ॥३॥
मानसोपचारैःसंपूज्य ॥ॐ महामाले
महामायेसर्वशक्तिस्वरूपिणि ॥ चतु
र्वर्गस्त्वयिन्यस्तस्तस्मान्मेसिद्धिदाभ

व ॥ १ ॥ इति मन्त्रेणमालांप्रार्थ्य ॥
ॐ सिद्ध्यैनमइतिमालांनत्वाजपेत् ॥
मन्त्रार्थस्तु मह्या सरस्वत्यादिरूपेचि
त्सदानन्दमयेचण्डिकेत्वांब्रह्मविद्याप्रा
प्त्यर्थंवयंसर्वदा ध्यायामः ॥ इतिम
न्त्रार्थानुसन्धानपूर्वकम् ।१०८ सहस्त्र
वारंनवार्णमन्त्रंजप्त्वा षडङ्गन्यासंकृ

त्वा रात्रिसूक्तंजपेत् तद्दै दिक्पाराय
णांवा ॥ तत्रेदंवैदिकम् । रात्रिव्यख्य
दिति सूक्तस्यकुशिकऋषिः रात्रिर्दैव
ता गायत्रीछन्दः ॥ श्रीजगदम्बाप्री
त्यर्थे सप्तशतीपाठादौजपे विनियोगः
ओं रात्रिव्यख्यदायतीपुरुत्रादेव्य १
क्षाभिः ॥ विश्वाआधिश्रियोधित ॥

ओर्वप्राअमर्त्यानिवतोदेव्यु १ द्वतः
ज्योतिषाबाधतेतमः ॥ निरुस्वसार
मस्कृतोषसंदेव्यायती ॥ अपेदुहा
सते तमः ॥ सानोअद्ययस्यावयंनिते
यामन्नाविक्ष्महि ॥ वृक्षेनवसतिंवयः ॥
निग्रामासो अविक्षतनिपद्वंतोनि पक्षि
णः ॥ निश्येनासश्चिदर्थिनः यावया

वृक्यं १ वृकं यवयस्तेनमूर्म्यै ॥ अ
थानः सुतराभव ॥ उपमापेपिशत्तमः
कृष्णांव्यक्तमस्थित ॥ उपऋणेवयात
य॥ उपतेगाइवाकरंवृणीष्वदुहितर्दिवः
रात्रिस्तोमंनजिग्युषे ॥ १ ॥ इति
ऋग्वेदोक्तंरात्रिसूक्तं ॥ अथपौराणम्॥
विश्वेश्वरींजगद्धात्रीं स्थितिसंहारका

रिणीम् ॥ निद्रांभगवतींविष्णोरतुलां

तेजसः प्रभुः ॥ १ ॥ ब्रह्मोवाच ॥

त्वंस्वाहात्वंस्वधात्वंहिवषट्कारःस्वरा

त्मिका॥ सुधात्वंमक्षरेनित्येत्रिधामा

त्मिकास्थिता ॥ २ ॥ अर्धमात्रा

स्थितानित्यायानुच्चार्याविशेषतः ॥

त्वमेवसंध्यासावित्रीत्वंदेविजननीपरा

॥ ३ ॥ त्वयैवधार्यतेसर्वंत्वयैतत्सृज्य
तेजगत् ॥ त्वयैतत्पाल्यतेदेवित्वमत्स्यं
तेचसर्वदा ॥ ४ ॥ विसृष्टौ सृष्टिरूपा
त्वं स्थितिरूपाचपालने ॥ तथासंहृ
तिरूपांतेजगतोस्यजगन्मये ॥ ५ ॥
महाविद्यामहामाया महामेधामहा
स्मृतिः ॥ महामोहा चभवती महा

देवीमहासुरी ॥ ६ ॥ प्रकृतिस्त्वं च
सर्वस्य गुणत्रयविभाविनी ॥ काल
रात्रिर्महारात्रिर्मोहरात्रिश्चदारुणा ॥
॥ ७ ॥ त्वं श्रीस्त्वमीश्वरीत्वंह्रीस्त्वं
बुद्धिर्बोधलक्षणा ॥ लज्जापुष्टिस्तथा
तुष्टिस्त्वं शांतिः क्षांतिरेवच ॥ ८ ॥
खड्गिनीशूलिनीघोरागदिनीचक्रिणी

तथा ॥ शंखिनीचापिनीबाणाभुशुंडी
परिघायुधा ॥ ९ ॥ सौम्यासौम्यतरा
शेष सौम्येभ्यस्त्वतिसुन्दरी ॥ पराप
राणांपरमात्वमेव परमेश्वरी ॥ १० ॥
यच्चकिंचित्क्वचिद्वस्तु सदसद्वाऽखि
लात्मिके ॥ तस्यसर्वस्य याशक्तिः
सात्वंकिं स्तूयसेतदा ॥ ११ ॥ यया

त्वयाजगत्स्रष्टा जगत्पातात्तियोजगत्

॥ सोपिनिद्रावशं नीतःकस्त्वांस्तोतु

मिहेश्वरः ॥ १२ ॥ विष्णुःशरीरग्रहण

महमीशानमेवच ॥ कारितास्तेयतो

तस्त्वांकःस्तोतुंशक्तिमान्भवेत् ॥१३॥

सात्वमित्थंप्रभावैः स्वैरुदारैर्देविसंस्तु

ता ॥ मोहयेतौदुराधर्षावसुरौमधुकैट

भौ ॥ १४ ॥ प्रबोधंचजगत्स्वामीनीय
तामच्युतोलघु ॥ बोधश्चक्रियाताम
स्यहन्तुमेतौमहासुरौ ॥ १५ ॥ इतिरा
त्रिसूक्तं समाप्तम् ॥ अथपल्लवयोजना
संपुटीकरणपाठज्ञापकंयथा ॥ पल्लव
प्रकारः । सर्वमङ्गल० इतिमन्त्रपल्ल
वम् ॐ मार्कण्डेयउवाच सर्वमङ्गल०

ययौ ॥ २३ ॥ दुरात्मंस्तिष्ठतिष्ठेति
व्याजहाराम्बिकायदा ॥ तदाजयेत्य
भिहितंदेवैराकाशसंस्थितैः ॥ २४ ॥
शुम्भेनागत्ययाशक्तिर्मुक्ताज्वालाति
भीषणा ॥ आयातीवह्निकूटाभासा
निरस्तामहोल्कया ॥ २५ ॥ सिंहना
देनशुम्भस्यव्याप्तलोकत्रयान्तरम्

निर्घातनिःस्वनोघोरो जितवानवनीप
ते ॥ २६ ॥ शुम्भमुक्तान्छरान्देवी
शुम्भस्तत्प्रहितान्छरान् ॥ चिच्छेद
स्वशरैरुग्रैः शतशोथसहस्रशः २७
ततः साचण्डिकाक्रुद्धाशूलेनाभिजघा
नतम् ॥ सतदाभिहतोभूमौमूर्च्छितो
निपपातह ॥ २८ ॥ ततोनिशुम्भः

संप्राप्य चेतनामात्तकार्मुकः ॥ आज
घान शरैर्देवीं कालीं केसरिणं तथा ।२९।
पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः ॥
चक्रायुधेन दितिजश्छादयामास चण्डि
काम् ॥ ३० ॥ ततो भगवती क्रुद्धा दु
र्गा दुर्गार्तिनाशिनी ॥ चिच्छेद
तानि चक्राणि स्वशरैः सायकांश्च तान्

॥ ३१ ॥ ततोनिशुम्भोवेगेनगदामादा
यचारिडकाम् ॥ अभ्यधावतवैहन्तुंदै
त्यसेनासमावृतः ॥ ३२ ॥ तस्याप
ततएवाशुगदांचिच्छेदचारिडका ॥
खड्गेनशितधारेणसचशूलंसमाददे
॥ ३३ ॥ शूलहस्तंसमायान्तंनिशु
म्भममरार्दनम् ॥ हृदिविव्याधशूले

नवेगाविद्धेनचण्डिका ॥ ३४ ॥ भि
न्नस्यतस्यशूलेनहृदयान्निःसृतोपरः ॥
महाबलोमहावीर्यस्तिष्ठेतिपुरुषोवदन्
॥ ३५ ॥ तस्यनिष्क्रामतोदेवीप्रहस्य
स्वनवत्ततः ॥ शिरश्चिच्छेदखड्गेनत
तोसावपतद्भुवि ॥ ३६ ॥ ततः सिंह
श्चखादोग्रदंष्ट्राक्षुण्णशिरोधरान् ॥

असुरांस्तांस्तथाकालीशिवदूतीतथाप
ान् ॥ ३७ ॥ कौमारीशक्तिनिर्भि
न्नाः केचिन्नेशुर्महासुराः ॥ ब्रह्माणी
मन्त्रपूतेनतोयेनान्येनिराकृताः॥३८॥
माहेश्वरीत्रिशूलेनभिन्नाः पेतुस्तथापरे
॥ वाराहीतुण्डघातेनकेचिच्चूर्णीकृता
भुवि ॥ ३९ ॥ खण्डंखण्डंचचक्रेण

वैष्णव्यादानवाःकृताः ॥ वज्रेणाचै
न्द्रीहस्ताग्रविमुक्तेनतथापरे॥ ४० ॥
केचिद्विनेशुरसुराः केचिन्नष्टामहाहवा
त् ॥ भक्षिताश्चापरेकालीशिवदूती
मृगाधिपैः ॥ ४१ ॥ इति श्रीमार्कं
ण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमा
हात्म्येनिशुम्भवधोनामनवमोध्यायः

॥ ९ ॥ उवाच ॥ २ ॥ श्लोकाः ॥३९॥
एवं ॥ ४१ ॥ एवमादितः ॥ ५४३ ॥
ॐऐं ऋषिरुवाच ॥ १ ॥ निशु
म्भंनिहतं दृष्ट्वाभ्रातरंप्राणसंमितम्
॥ हन्यमानंबलं चैवशुम्भः क्रुद्धोऽब्र
वीद्वचः ॥ २ ॥ बलावलेपाद्दुष्टेत्वं
मादुर्गेगर्वमावह ॥ अन्यासांबलमाश्रि

त्ययुध्यसेयातिमानिनी ॥ ३ ॥ दे
व्युवाच ॥ ४ ॥ एकैवाहंजगत्यत्र
द्वितीयाकाममापरा ॥ पश्यैतादुष्टम
य्येवविशन्त्योमद्विभूतयः ॥ ५ ॥
ततः समस्तास्तादेव्योब्रह्माणीप्रमु
खालयम् ॥ तस्यादेव्यास्तनौजग्मु
रेकैवासीत्तदाम्बिका ॥ ६ ॥ देव्युवा

च ॥ ७ ॥ अहंविभूत्याबहुभिरिह
रूपैर्यदास्थिता ॥ तत्संहृतंमयैकैवति
ष्ठाम्याजौस्थिरोभव ॥ ८ ॥ ऋषिरु
वाच ॥ ९ ॥ ततः प्रववृतेयुद्धंदेव्याः
शुम्भस्यचोभयोः ॥ पश्यतांसर्वदे
वानामसुराणांचदारुणाम् ॥ १० ॥
शरवर्षैःशितैः शस्त्रैस्तथास्त्रैश्चैवदा

रुणौः ॥ तयोर्युद्धमभूद्भूयः सर्वलोक
भयंकरम् ॥ ११ । दिव्या
न्यस्त्राणिशतशोमुमुचेयान्यथाम्बि
का ॥ बभंजतानिदैत्येन्द्रस्तत्प्रतीघा
तकर्तृभिः ॥ १२ ॥ मुक्तानितेनचा
स्त्राणि दिव्यानिपरमेश्वरी ॥ बभंज
लीलयैवोग्रहुंकारोच्चारणादिभिः १३

ततश्शरशतैर्देवीमाच्छादयतसोसुरः ॥
सापितत्कुपितादेवीधनुश्चिच्छेदचेषु
भिः ॥ १४ ॥ छिन्ने धनुषिदैत्येन्द्र
स्तथा शक्तिमथाददे ॥ चिच्छेददेवी
चक्रेणतामप्यस्यकरेस्थिताम् ॥ १५ ॥
ततः खड्गमुपादायशतचन्द्रंचभानु
मत् ॥ अभ्यदावत्तदा देवींदैत्याना

मधिपेश्वरः ॥ १६ ॥ तस्यापततएवा
शु खड्गंचिच्छेदचण्डिका ॥ धनुर्मु
क्तैः शितैर्बाणैश्चर्मचार्ककरामलम्
॥ १७ ॥ हताश्वः सतदादैत्यश्छिन्न
धन्वाविसारथिः ॥ जग्राहमुद्गरंघोर
मम्बिकानिधनोद्यतः ॥ १८ ॥ चि
च्छेदापततस्तस्यमुद्गरंनिशितैः शरैः

सप्त.

२०६

तथापिसोऽभ्यधावत्तांमुष्टिमुद्यम्यवेग
वान् ॥ १९ ॥ समुष्टिंपातयामासहृ
दयेदैत्यपुङ्गवः ॥ देव्यास्तंचापिसादे
वीतलेनोरस्यताडयत् ॥ २० ॥ तल
हाराभिहतोनिपपातमहीतले ॥ सदै
त्यराजो सहसापुनरेवतथोत्थितः
॥ २१ ॥ उत्पत्यचप्रगृह्योच्चैर्देवीगग

नमास्थितः॥ तत्रापिसानिराधारायुयु
धेतेनचण्डिका ॥ २२ ॥ नियुद्धंखेते
दादैत्यश्चण्डिकाचपरस्परम ॥ चक्र
तुः प्रथमंसिद्धमुनिविस्मयकारकम्
॥ २३ ॥ ततोनियुद्धंसुचिरंकृत्वातेना
म्बिकासह । उत्पाट्यभ्रामयामास
चिक्षेपधरणीतले ॥ २४ ॥ सक्षिप्तो

धरणींप्राप्य मुष्टिमुद्यम्यवेगतः ॥
अभ्यधावतदुष्टात्माचण्डिकानिधने
च्छया ॥ २५ ॥ तमायान्तं ततो
देवी सर्वदैत्यजनेश्वरम् ॥ जगत्यांपा
तयामासाभित्त्वाशूलेनवक्षसि ॥ २६ ॥
सगतासुः पपातोर्व्यां देवीशूलाग्रवि
क्षतः ॥ चालयन्सकलांपृथ्वींसाब्धि

द्वीपांसपर्वताम् ॥ २७ ॥ ततः प्रसन्न
मखिलंहतेतस्मिन्दुरात्मनि ॥ जग
त्स्वास्थ्यमतीवापनिर्मलंचाभवन्नभः
॥ २८ ॥ उत्पातमेघाः सोल्काये प्रा
गासंस्तेशमंययुः ॥ सरितोमार्गवाहिं
न्यस्तथासंस्तत्रपातिते ॥ २९ ॥ त
तोदेवगणाः सर्वैहर्षनिर्भरमानसाः ॥

बभूवुर्निहतेतस्मिन्गन्धर्वाललितंज
गुः ॥ ३० ॥ अवादयंस्तथैवान्येन
नृतुश्चाप्सरोगणाः ॥ ववुः पुण्यास्त
थावाताः सुप्रभोभूद्दिवाकरः ॥ ३१ ॥
जज्वलुश्चाग्नयः शान्ताःशान्तादिग्ज
नितस्वनाः॥३२ इति श्रीमार्कण्डेयपु
राणेसावर्णिकेमन्वन्तरेदेवीमाहात्म्य

शुम्भवधो नाम दशमोध्यायः ॥१०॥
उवाच ॥४॥ अर्ध ॥१॥ श्लोकमन्त्राः
॥२७॥एवं॥३२॥एवमादितः॥५७५॥
ॐ ह्रीं ऋषिरुवाच ॥ १ ॥ देव्याहते
तत्रमहासुरेन्द्रे सेन्द्राः सुरावह्निपुरोग
मास्ताम् ॥ कात्यायनीं तुष्टुवुरिष्टला
भाद्विकाशि वक्त्रास्तृविकासिताशाः

॥ २ ॥ देवीप्रपन्नार्तिहरे प्रसीद प्रसीद मात
र्जगतोऽखिलस्य। प्रसीद विश्वेश्वरि पाहि
विश्वं त्वमीश्वरी देवि चराचरस्य ॥ ३ ॥
आधारभूता जगतस्त्वमेका महीस्वरू
पेण यतः स्थितासि ॥ अपां स्वरूपस्थि
तया त्वयैतदाप्यायते कृत्स्नमलङ्
घ्यवीर्ये ॥ ४ ॥ त्वं वैष्णवी शक्तिरनन्त

वीर्या विश्वस्यबीजंपरमासिमाया ॥
संमोहितंदेविसमस्तमेतत्त्वंवैप्रसन्ना
भुविमुक्तिहेतुः ॥ ५ ॥ विद्याःसमस्त
स्तवदेविभेदाःस्त्रियःसमस्ताःसकला
जगत्सु ॥ त्वयैकयापूरितमम्बयैतत्का
तेस्तुतिः स्तव्यपरापरोक्तिः ॥ ६ ॥
सर्वभूतायदादेवीस्वर्गमुक्तिप्रदायिनी॥

त्वंस्तुतास्तुतयेकावाभवन्तुपरमोक्तये
॥ ७ ॥ सर्वस्यबुद्धिरूपेणजनस्यहृदि
संस्थिते ॥ स्वर्गापवर्गदेदेविनारायणि
नमोस्तुते ॥ ८ ॥ कलाकाष्ठादिरूपे
ण परिणामप्रदायिनि ॥ विश्वस्योप
रतौशक्तेनारायणिनमोस्तुते ॥ ९ ॥
सर्वमङ्गलमाङ्गल्येशिवेसर्वार्थसाधिके

शरण्येत्र्यम्बकेगौरिनारायणिनमो

स्तुते ॥ १० ॥ सृष्टिस्थितिविनाशानां

शक्तिभूतेसनातनि ॥ गुणाश्रयेगुण

मयेनारायणिनमोस्तुते ॥ ११ ॥ शर

णागतदीनार्तपरित्राणपरायणे । सर्व

स्यार्तिहरेदेवि नारायणिनमोस्तुते ॥

॥१२ ॥ हंसयुक्तविमानस्थेब्रह्माणी:

रूपधारिके ॥ कौशांभःक्षरिकेदेवि
नारायणिनमोस्तुते ॥ १३ ॥ त्रिशू
लचन्द्राहिधरे महावृषभवाहिनि ॥
माहेश्वरीस्वरूपेणनारायणि नमो
स्तुते ॥ १४ ॥ मयूरकुक्कुटवृतेमहा
शक्तिधरेनघे ॥ कौमारीरूपसंस्थाने
नारायणिनमोस्तुते ॥ १५ ॥ शंखच

क्रगदाशार्ङ्गगृहीतपरमायुधे ॥ प्रसी
दवैष्णवीरूपेनारायणिनमोस्तुते।१६
गृहीतोग्रमहाचक्रेदंष्ट्रोद्धृतवसुन्धरे ॥
वराहरूपिणिशिवेनारायणिनमोस्तुते
॥ १७ ॥ नृसिंहरूपेणोग्रेणहन्तुंदै
त्यान्कृतोद्यमे ॥ त्रैलोक्यत्राणसहिते
नारायणिनमोस्तुते ॥ १८ ॥ किरी

टिनिमहावज्रे सहस्रनयनोज्ज्वले ॥
वृत्रप्राणहरे चैन्द्रिनारायणि नमोस्तु
ते ॥ १९ ॥ शिवदूतीस्वरूपेणहतदै
त्यमहाबले ॥ घोररूपेमहारावेनारा
यणि नमोस्तुते ॥ २० ॥ दंष्ट्राकरा
लवदनेशिरोमालाविभूषणे ॥ चामु
ण्डेमुण्डमथने नारायणिनमोस्तुते

॥ २१ ॥ लक्ष्मिलज्जेमहाविद्येश्रद्धे
पुष्टिस्वधेध्रुवे ॥ महारात्रि महावि
द्येनारायणिनमोस्तुते ॥ २२ ॥ मे
धे सरस्वतिवरेभूतिबाभ्रवितामसि ॥
नियतेत्वंप्रसीदेशेनारायणिनमोस्तु
ते ॥ २३ ॥ सर्वस्वरूपेसर्वेशेसर्वश
क्तिसमन्विते ॥ भयेभ्यस्त्राहिनोदे

विदुर्गेदेविनमोस्तुते ॥ २४ ॥ एत
त्तेवदनंसौम्यंलोचनत्रयभूषितम् ॥
पातुनः सर्वभूतेभ्यः कात्यायनिनमो
स्तुते ॥ २५ ॥ ज्वालाकरालमत्यु
ग्रमशेषा सुरसूदनम् ॥ त्रिशूलंपातु
नोभीतेर्भद्रकालि नमोस्तुते ॥ २६ ॥
हिनास्तिदैत्यतेजांसिस्वनेनापूर्ययाज

गत् ॥ साघंटापातुनोदेविपापेभ्योनः

सुतानिव ॥ २७ ॥ असुरासृग्वसापं

कचर्चितस्तेकरोज्ज्वलः ॥ शुभाय

खड्गो भवतुचण्डिकेत्वांनतावयम्

॥ २८ ॥ रोगानशेषानपहंसितुष्टारु

ष्टातुकामान्सकलानभीष्टान् ॥ त्वा

माश्रितानांनविपन्नराणांत्वामाश्रिता

ह्याश्रयतांप्रयांति ॥ २९ ॥ एतत्कृतंय
त्कदनंत्वयाद्यधर्मद्विषांदेविमहासुरा
णाम् ॥ रूपैरनेकैर्बहुधात्ममूर्तिंकृत्व
ऽम्बिकेतत्प्रकरोतिकान्या ॥ ३० ॥
विद्यासुशास्त्रेषुविवेकदीपेष्वाद्येषुवा
क्येषुचकात्वदन्या ॥ ममत्वगर्तेऽति
महान्धकारेविभ्रामयत्येतदतीवविश्व

म् ॥ ३१ ॥ रक्षांसियत्रोग्रविषाश्चना
गा यत्रारयो दस्युबलानियत्र ॥ दा
वानलोयत्र तथाब्धिमध्येतत्रास्थिता
त्वं परिपासि विश्वम् ॥ ३२॥ विश्वेश्वरि
त्वं परिपासिविश्वंविश्वात्मिकाधारय
सीहविश्वम् ॥ विश्वेशवन्द्याभवती
भवन्ति विश्वाश्रयाये त्वयिभक्तिन

म्रा: ॥ ३३ ॥ देवि प्रसीद परिपालय नो
ऽरिभीतेर्नित्यं यथाऽसुरवधादधुनैव स
द्यः ॥ पापानि सर्वजगतां प्रशमं नय
शु उत्पातपाकजनितांश्च महोपसर्गान्
॥ ३४ ॥ प्रणतानां प्रसीद त्वं देवि विश्वा
र्तिहारिणि ॥ त्रैलोक्यवासिनामीड्ये
लोकानां वरदा भव ॥ ३५ ॥ देव्युवाच

॥ ३६ ॥ वरदाहं सुरगणा वरं यं मन
सेच्छथ ॥ तंवृणुध्वंप्रयच्छामि जगता
मुपकारकम् ॥ ३७ ॥ देवाऊचुः
॥ ३८ ॥ सर्वाबाधाप्रशमनंत्रैलोक्य
स्याखिलेश्वरि ॥ एवमेवत्वयाकार्य
मस्मद्वैरिविनाशनम् ॥३९॥ देव्युवाच
॥ ४० ॥ वैवस्वतेऽन्तरेप्राप्तेअष्टाविंश

सप्त.

२१६

तिमेयुगे ॥ शुम्भोनिशुम्भश्चैवान्या
वुत्पत्स्येतेमहासुरौ ॥ ४१ ॥ नन्द
गोपगृहे जाता यशोदागर्भसम्भवा ॥
ततस्तौ नाशयिष्यामि विन्ध्याचल
निवासिनी ॥ ४२ ॥ पुनरप्यतिरौद्रेण
रूपेणपृथिवीतले ॥ अवतीर्यहनिष्या
मिवैप्रचित्तांस्तुदानवान् ॥ ४३ ॥

१.३१

२१६

भक्षयंत्याश्चतानुग्रान्वैप्रचित्तान्म
हासुरान् ॥ रक्तादन्ता भविष्यन्ति
दाडिमीकुसुमोपमाः ॥ ४४ ॥ ततो
मांदेवताः स्वर्गेमर्त्यलोके च मान
वाः ॥ स्तुवन्तोऽव्याहरिष्यन्तिसततं
रक्तदन्तिकाम् ॥ ४५ ॥ भूयश्चश
तवार्षिक्यामनावृष्ट्यामनम्भसि ॥ मु

निभिः संस्तुताभूमौसम्भविष्याम्य
योनिजा ॥ ४६ ॥ ततः शतेननेत्रा
णांनिरीक्षिष्यामियन्मुनीन् ॥ की
र्तयिष्यन्तिमनुजाः शताक्षीमितिमां
ततः ॥ ४७ ॥ ततोहमखिलंलोकमा
त्मदेहसमुद्भवैः ॥ भरिष्यामिसुराः
शाकैरावृष्टेः प्राणधारकैः ॥ ४८ ॥

शाकम्भरीतिविख्यातिं तदायास्या
म्यहंभुवि ॥ तत्रैव च वधिष्यामिदु
र्गमाख्यं महासुरम् ॥ ४९ ॥ दुर्गादे
वीतिविख्यातंतन्मेनामभविष्यति ॥
पुनश्चाहंयदा भीमंरूपंकृत्वाहिमाच
ले ॥ ५० ॥ रक्षांसिभक्षयिष्यामि
मुनीनांत्राणकारणात् ॥ तदामांमु

सप्त. २१८

नयः सर्वे स्तोष्यंत्यानम्रमूर्तयः ॥ ५१ ॥ भीमादेवीतिविख्यातंतन्मे नामभविष्यति ॥ यदारुणाख्यस्त्रै लोक्येमहाबाधांकरिष्यति ॥ ५२ ॥ तदाहंभ्रामरंरूपंकृत्वासंख्येय षट्पद म ॥ त्रैलोक्यस्याहितार्थायवधिष्यामि महासुरम् ॥ ५३ ॥ भ्रामरीतिचमां

अ. ११

२१८

लोकास्तदास्तोष्यन्तिसर्वतः ॥ इत्थंय
दायदाबाधादानवोत्थाभविष्यति५४
तदातदावतीर्याहंकरिष्याम्यरिसंक्षय
म ॥ ५५ ॥ इति श्रीमार्कंडेयपुरा
णेसावर्णिकेमन्वन्तरे देवीमाहात्म्ये
नारायणीस्तुतिर्नामैकादशोध्यायः
। ११ ॥ उवाच ॥ ४ ॥ अर्ध ॥ १ ॥

श्लोकमन्त्राः ॥ ५० ॥ एवं ॥ ५५ ॥
एवमादितः ॥ ६३० ॥
ॐ क्लीं देव्युवाच ॥ १ ॥ ए
भिस्तवैश्चमांनित्यंस्तोष्यतेयः समा
हितः ॥ तस्याहंसकलांबाधांनाशयि
ष्याम्यसंशयम् ॥ २ ॥ मधुकैटभना
शंचमहिषासुरघातनम् ॥ कीर्तयि

ष्यन्तियेतद्वद्वधंशुम्भनिशुम्भयोः

॥ ३ ॥ अष्टम्यांचचतुर्दश्यांनवम्यांचै

कचेतसः ॥ श्रोष्यन्तिचैवयेभक्त्याम

ममाहात्म्यमुत्तमम् ॥ ४ ॥ नतेषांदु

ष्कृतंकिंचिद्दुष्कृतोत्थानचापदः ॥ न

भविष्यतिदारिद्र्यंनचैवेष्टवियोजनम्

॥ ५ ॥ शत्रुतोनभयंतस्यदस्युतोवान

राजतः ॥ नशस्त्रानलतोयौघात्कदा चित्संभविष्यति ॥ ६ ॥ तस्मान्ममै तन्माहात्म्यंपठितव्यंसमाहितैः ॥ श्रोतव्यं चसदाभक्त्यापरंस्वस्त्ययनं हितत् ॥ ७ ॥ उपसर्गानशेषांस्तुमहा मारीसमुद्भवान् ॥ तथात्रिविधमुत्पा तंमाहात्म्यंशमयेन्मम ॥ ८ ॥ यत्रै

तत्पठ्यतेसम्यङ् नित्यमायतनेमम ॥
सदानताद्विमोक्ष्यामिसान्निध्यंतत्रमे
स्थितम् ॥ ९ ॥ बलिप्रदानेपूजाया
मग्निकार्येमहोत्सवे ॥ सर्वंममैतन्मा
हात्म्यमुच्चार्यंश्राव्यमेवच ॥ १० ॥
जानताजानतावापिबलिपूजां तथाकृ
ताम् ॥ प्रतीक्षिष्याम्यहंप्रीत्यावाह्नि

होमंतथाकृतम् ॥ ११ ॥ शरत्काले महापूजाक्रियतेयाच वार्षिकी ॥ तस्यांममैतन्माहात्म्यंश्रुत्वा भक्तिसमन्वितः ॥ १२ ॥ सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ॥ मनुष्योमत्प्रसादेनभविष्यतिनसंशयः ॥ १३ ॥ श्रुत्वाममैतन्माहात्म्यंतथाचोत्पत्तयः

शुभाः ॥ पराक्रमंचयुद्धेषुजायतेनि
र्भयः पुमान् ॥ १४ ॥ रिपवः संक्ष
यंयान्तिकल्याणंचोपपद्यते ॥ नन्दते
चकुलंपुंसांमाहात्म्यंममशृणवताम् ॥
॥ १५ ॥ शान्तिकर्मणिसर्वत्रतथा
दुःस्वप्नदर्शने ॥ ग्रहपीडासुचोग्रासु
माहात्म्यंशृणुयान्मम ॥ १६ ॥ उप

सर्गाः शमं यान्तिग्रहपीडाश्चदारु
णाः ॥ दुःस्वप्नंचनृभिर्दृष्टंसुस्वप्नमु
पजायते ॥ १७ ॥ बालग्रहाभिभूता
नांबालानांशान्तिकारकम् ॥ सङ्घ
तभेदेचनृणां मैत्रीकरणमुत्तमम् ॥
॥ १८ ॥ दुर्वृत्तानामशेषाणां बलहा
निकरंपरम् ॥ रक्षोभूतपिशाचानां

पठनादेवनाशनम् ॥ १९ ॥ सर्वंममै
तन्माहात्म्यंममसान्निधिकारकम् ॥
पशुपुष्पार्घंधूपैश्चगन्धदीपैस्तथोत्तमैः
॥ २० ॥ विप्राणांभोजनैर्होमैः प्रोक्ष
णीयैरहर्निशम् ॥ अन्यैश्चाविविधै
र्भोगैः प्रदानैर्वत्सरेणाया ॥ २१ ॥ प्री
तिर्मेंक्रियतेसास्मिन्सकृत्सुचरितेश्रुते

श्रुतं हरति पापानि तथारोग्यं प्रयच्छति ॥ २२ ॥ रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम ॥ २३ ॥ युद्धेषु चरितं यन्मे दुष्टदैत्यनिबर्हणम् ॥ तस्मिञ्छ्रुते वैरिकृतं भयं पुंसां न जायते ॥ ॥ २४ ॥ युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः ॥ ब्रह्मणा

चक्रतास्तास्तुप्रयच्छन्तिशुभांमातिम्

॥ २५ ॥ अरण्येप्रान्तरेवापिदावाग्नि

परिवारितः दस्युभिर्वावृतः शून्येगृहीं

तोवापिशत्रुभिः ॥ २६ ॥ सिंहव्या

घ्रानुयातोवा वनेवा वनहस्तिभिः ॥

राज्ञाक्रुद्धेनचाज्ञप्तोवध्योबन्धगतोपि

वा ॥२७॥ आघूर्णितोवावातेनास्थितः

पीतेमहार्णवे ॥ पतत्सुचापिश
स्त्रेषुसंग्रामेभृशदारुणे ॥ २८ ॥ सर्वा
बाधासुघोरासु वेदनाभ्यर्दितोपिवा ॥
स्मरन्ममैतच्चरितंनरोमुच्येतसङ्कटात्
॥२९॥ ममप्रभावात्सिंहाद्यादस्युवोवै
रिणस्तथा ॥ दूरादेवपलायन्तेस्मर
तश्चरितंमम ॥ ३० ॥ ऋषिरुवाच

॥ ३१ ॥ इत्युक्त्वा साभगवतीच
ण्डिका चण्डविक्रमा ॥ ३२ ॥
पश्यतामेवदेवानांतत्रैवान्तरधीयत ॥
तेपिदेवानिरातङ्काः स्वाधिकारान्यथा
पुरा ॥ ३३ ॥ यज्ञभागभुजः सर्वेच
क्रुर्विनिहतारयः ॥ दैत्याश्चदेव्यानि
हतेशुम्भेदेवरिपौयुधि ॥ ३४ ॥ जग

द्विध्वंसिनितस्मिन्महोग्रेतुलाविक्रमे ॥
निशुम्भेचमहावीर्येशेषाः पातालमा
ययुः ॥ ३५ ॥ एवंभगवती देवीसा
नित्यापिपुनःपुनः ॥ संभूयकुरुतेभूप
जगतः परिपालनम् ॥ ३६ ॥ तयैत
न्मोह्यतेविश्वंसैवविश्वंप्रसूयते ॥ सा
याचिताचविज्ञानं तुष्टाऋद्धिंप्रयच्छ

ति ॥ ३७ ॥ व्याप्तंतयैतत्सकलंब्र
ह्मांडंमनुजेश्वर ॥ महाकाल्यामहा
कालेमहामारीस्वरूपया ॥ ३८ ॥
सैवकालेमहामारीसैवसृष्टिर्भवत्यजा ।
स्थितिंकरोतिभूतानांसैवकालेसनात
नी ॥ ३९ ॥ भवकाले नृणांसैवल
क्ष्मीर्वृद्धिप्रदागृहे ॥ सैवाभावेतथाल

क्ष्मीर्विनाशायोपजायते ॥ ४० ॥
स्तुतासंपूजितापुष्पैर्धूपगन्धादिभिस्त
था ॥ ददातिवित्तंपुत्रांश्चमतिंधर्मेग
तिं शुभाम् ॥ ४१ ॥ इति श्रीमार्क
ण्डेयपुराणेसावर्णिकेमन्वन्तरेदेवीमा
हात्म्येभगवतीवाक्यंनामद्वादशोध्या
यः ॥ १२ ॥ उवाच ॥ २ ॥ अ

र्घे ॥ २ ॥ श्लोकाः ॥ ३७ ॥ एवं ॥ ४१ ॥ एवमादितः ॥ ६७१ ॥

ॐ ऐंह्रीं क्लीं ऋषिरुवाच ॥ १ ॥

एतत्तेकथितंभूपदेवीमाहात्म्यमुत्तमम्
एवंप्रभावासादेवीययेदंधार्यतेजगत् ॥
॥२॥ विद्यातथैवक्रियतेभगवद्विष्णुमा
यया॥ तयात्वमेषवैश्यश्चतथैवान्येवि

वेकिनः ॥ ३ ॥ मोहयन्तेमोहिताश्चा
न्येमोहमेष्यन्तिचापरे ॥ तामुपै
हिमहाराजशरणांपरमेश्वरीम् ॥ ४ ॥
आराधिता सैवनृणां भोग
स्वर्गापवर्गदा ॥ ५ ॥ मार्कण्डे
यउवाच ॥ ६ ॥ इति तस्यवचः श्रु
त्वासुरथः सनराधिपः ॥ ७ ॥ प्रणि

पत्यमहाभागंतमृषिंसंशितव्रतम् ॥
निर्विण्णोऽतिममत्वेनराज्यापहरणेन
च ॥ ८ ॥ जगामसद्यस्तपसेसचवै
श्योमहामुने ॥ संदर्शनार्थमम्बायान
दीपुलिनसंस्थितः ॥ ९ ॥ सचवैश्य
स्तपस्तेपेदेवीसूक्तं परंजपन् ॥ तौत
स्मिन्पुलिनेदेव्याः कृत्वामूर्तिंमहीम

यीम् ॥ १० ॥ अर्हणांचक्रतुस्तस्याः
पुष्पधूपाग्नितर्पणैः ॥ निराहारौयता
हारौतन्मनस्कौसमाहितौ ॥ ११ ॥
ददतुस्तौबलिंचैवनिजगात्रासृगुक्षित
म् ॥ १२ ॥ एवंसमाराधयतोस्त्रिभि
र्वर्षैर्यतात्मनोः ॥ परितुष्टाजगद्धात्री
प्रत्यक्षंप्राहचंडिका ॥ १३ ॥ देव्यु

वाच ॥ १४ ॥ यत्प्रार्थ्यतेत्वयाभूप

त्वयाचकुलनन्दन ॥ १५ ॥ मत्तस्त

त्प्राप्यतांसर्वंपरितुष्टाददामितत् ॥ १६ ॥

मार्कण्डेयउवाच ॥ १७ ॥ ततोवव्रे

नृपोराज्यमविभ्रंशयन्यजन्मानि ॥ १८ ॥

अत्रैवचानिजंराज्यंहतशत्रुबलंबलात्

॥ सोपिवैश्यस्ततोज्ञानंवव्रेनिर्विण्ण

मानसः ॥ १९ ॥ ममेत्यहमितिप्र
ज्ञः सङ्गविच्युतिकारकम् ॥ २० ॥
देव्युवाच ॥ २१ ॥ स्वल्पैरहोभिर्नृप
ते स्वंराज्यंप्राप्स्यते भवान् ॥ २२ ॥
हत्वारिपूनस्खलितंतवतत्रभविष्यति॥
मृतश्चभूयः संप्राप्यजन्मदेवाद्विवस्व
तः ॥ २३ ॥ सावर्णिकोनाममनुर्भ

वान्नभुविभाविष्यति ॥ वैश्यवर्यत्वया
यश्चवरोस्मत्तोभिवांछितः ॥ २४ ॥
तंप्रयच्छामिसंसिद्ध्यैतवज्ञानंभविष्य
ति॥२५॥मार्कण्डेयउवाच ॥२६॥ इति
दत्वातयोर्देवीयथाभिलाषितंवरम्।२७
बभूवान्तर्हितासद्यो भक्त्याताभ्याम
भिष्टुता ॥एवं देव्या वरंलब्ध्वासुरथः

क्षत्रियर्षभः॥२८॥ सूर्याज्जन्मसमासा
द्य सावर्णिर्भविता मनुः॥२९॥ क्लीं ॐ
ह्रां ह्रं नम इतिश्रीमार्कण्डेयपुराणेसाव
र्णिकेमन्वन्तरे देवीमाहात्म्ये सुरथवै
श्ययोर्वरप्रदानंनामत्रयोदशोध्यायः
॥१३॥उवाचमन्त्राः६॥अर्धमन्त्रः११
श्लोकाः१२एवं२९एवमादितः७००

अथ श्रीमद्भगवत्यानीराञ्जनम् ॥

ॐ जयदेवि जयदेवि जयकृष्णे माये
जयानिरवधिच्छाये रन्तुं रमणासुशीलेत्रि
गुणीकृतकाये षट्कोणोपरिशक्तित्रय
चक्रं दत्तं तदुपरिनागदलीकृतभूपुरम
पि दत्तम् एवंसप्तावरणितपरिपूरितयन्त्र
म् हृदयेमनसानिहितं द्वाविंशतिमन्त्र

म् जयदेवि जयदेवि ॥ १ ॥ सजलघ
नच्छविकाये पितृवनकृतसदने घोरान
नपरिभूषित रिपुभयकृतरदने शवकर
रचितानीवी शवयुगताटङ्के मुराडसुमा
लसुशोभितशिवशवपर्य्यङ्के जयदेवि
जयदेवि ॥ २ ॥ सद्यश्छिन्नशिरोवर
खड्गाभयवरदे मुक्तकचावलिरुचिरेब्र

ह्मादिकवरदेविपरीतारातिसक्ते दूरीकृत
वसनेमाहिषादिकपारिभक्षणारक्तीकृतर
दने जयदेवि जयदेवि ॥३॥ पात्रासा
दनबल्यलिपरिपूजासकलैः ब्रह्माद
भिरपिविबुधैरभिपूजितसुफलैः त्वच्च
रणाद्वयभक्तिज्योषड्किलमातः ईहेकि
ञ्चिन्नान्यंमानसधूतशातः जयदेवि

जयदेवि ॥४॥ इति श्रीशङ्कराचार्य्यविरचितं भगवत्यानीराञ्जनं समाप्तं शुभम् ॥

ऐंह्रींक्लींचामुण्डायैविच्चे अनेन न्यासंकृत्वाभगवतीमभ्यर्च्यपाठंकुर्यात्पुनः जप समर्प्यभगवतींप्रणमेत् ॥

---

अथोत्तरन्यासाः ॥ खड्गिनीशूलि
नीघोरा० हृदयायनमः ॥ शूलेनपाहि
नोदेवि० शिरसेस्वाहा ॥ प्राच्यांरक्ष
प्रतीच्यांच० शिखायैवषट् ॥ सौम्या
नियानिरूपाणि० कवचायहुं ॥ खड्ग
शूलगदादीनि० नेत्रत्रयायवौषट् ॥
सर्वस्वरूपेसर्वेशे० अस्त्रायफट् ॥ अथ

ध्यानम् ॥ विद्युद्दामसमप्रभां मृगपति
स्कन्धस्थितां भीषणां कन्याभिः कर
वालखेटविलसद्धस्ताभिरासेविताम् ॥
हस्तैश्चक्रगदासिखेटविशिखांश्चापंगुणं
तर्जनीं बिभ्राणामनलात्मिकांशशि
धरांदुर्गांत्रिनेत्राम्भजे ॥ १ ॥

अथ देवीसूक्तम् ॥ नमोदेव्यैमहादे

व्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभ
द्रायैनियताःप्रणातास्स्मताम्॥१॥रौद्रा
यैनमोनित्यायै गौर्य्यैधात्र्यैनमोनमः॥
ज्योत्स्नायैचेन्दुरूपिणायै सुखायैसत
तंनमः॥२॥ कल्याणयैप्रणातांवृद्ध्यै सि
द्ध्यैकुर्मोनमोनमः ॥ नैर्ऋत्यैभूभृतांल
क्ष्म्यै शर्वाणयैतेनमोनमः॥३॥दुर्गायैदु

दे.

२३४

गंपारायै सारायैसर्वकारिण्यै ॥ ख्यात्यै तथैवकृष्णायैधूम्रायैसततंनमः ॥ ४ ॥ अतिसौम्यातिरौद्रायैनतास्तस्यैनमो नमः ॥ नमोजगत्प्रतिष्ठायै देव्यैकृत्यनमोनमः ॥५॥ यादेवीसर्वभूतेषु विष्णुमायेतिशब्दिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥६॥ यादेवीसर्वभूतेषुचेत

सू.

२३४

नेत्यभिधीयते ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ ७ ॥ यादेवीसर्व
भूतेषु बुद्धिरूपेणसंस्थिता ॥ नमस्तस्यै
नमस्तस्यैनमस्तस्यैनमोनमः ॥८॥ या
देवीसर्वभूतेषुनिद्रारूपेणसंस्थिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोन
मः ॥९॥ यादेवीसर्वभूतेषु क्षुधारूपेण

संस्थिता ॥नमस्तस्यैनमस्तस्यैनमस्त
स्यैनमोनमः ॥१०॥ यादेवीसर्वभूतेषु
च्छायारूपेण संस्थिता॥ नमस्तस्यैन
मस्तस्यैनमस्तस्यैनमोनमः॥११॥ या
देवीसर्वभूतेषु शक्तिरूपेणसंस्थिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोन
मः ॥ १२ ॥ यादेवीसर्वभूतेषुतृष्णा

रूपेण संस्थिता॥ नमस्तस्यै नमस्तस्यै
नमस्तस्यै नमो नमः ॥१३॥ या देवी सर्व
भूतेषु क्षान्तिरूपेण संस्थिता ॥ नमस्त
स्यै नमस्तस्यै नमस्तस्यै नमो नमः १४॥
या देवी सर्वभूतेषु जातिरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो
नमः ॥ १५ ॥ या देवी सर्वभूतेषु लज्जा।

रूपेणसंस्थिता ॥ नमस्तस्यै नमस्त
स्यै नमस्तस्यैनमोनमः ॥ १६ ॥ यादे
वीसर्वभूतेषु शान्तिरूपेणसंस्थिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यै नमो
नमः ॥ १७ ॥ यादेवीसर्वभूतेषु श्रद्धा
रूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ १८ ॥ यादेवी

सर्वभूतेषु कान्तिरूपेणसंस्थिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोन
मः ॥ १९ ॥ यादेवीसर्वभूतेषु लक्ष्मी
रूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ २० ॥ या
देवीसर्वभूतेषु वृत्तिरूपेणसंस्थिता
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोन

दे.

२३७

मः ॥ २१ ॥ यादेवीसर्वभूतेषु स्मृति
रूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ २२ ॥ यादेवी
सर्वभूतेषुदयारूपेणसंस्थिता ॥ नमस्त
स्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥
२३ ॥ यादेवीसर्वभूतेषु तुष्टिरूपेणसं
स्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्त

सू.

२३७

स्यैनमोनमः ॥ २४ ॥ यादेवीसर्वभूते
षुमातृरूपेणासंस्थिता ॥ नमस्तस्यैन
मस्तस्यैनमस्तस्यैनमोनमः ॥ २५ ॥
यादेवीसर्वभूतेषु भ्रान्तिरूपेणासंस्थि
ता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यै
नमोनमः ॥ २६ ॥ इन्द्रियाणामधि
ष्ठात्री भूतानांचाखिलेषुया । भूतेषु

सततंतस्यैव्याप्त्यैदेव्यैनमोनमः॥२७
चितिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिताज
गत्॥नमस्तस्यैनमस्तस्यै नमस्तस्यैन
मोनमः ॥२८॥ स्तुतासुरैःपूर्वमभीष्टसं
श्रयात्तथासुरेन्द्रेणदिनेषुसेविता॥करोतु
सानःशुभहेतुरीश्वरी शुभानिभद्राण्य
भिहन्तुचापदः ॥२९॥ यासांप्रतंचोद्ध

तदैत्यतापितैरस्माभिरीशा च सुरैर्नम
स्यते ॥ या च स्मृता तत्क्षणमेव हन्ति नः
सर्वापदो भक्तिविनम्रमूर्तिभिः ॥३०॥
इति देवीसूक्तम् ॥ पठित्वाऽष्टोत्तरशतं
नवार्णजपं कृत्वा तदुत्तरन्यासान्विधा
य ॥ गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्म
त्कृतं जपम् ॥ सिद्धिर्भवतु मे देवि त्वत्प्रसा

दान्महेश्वरि ॥३१॥ इतिदेव्यावामह
स्तेजपंनिवेदयेत् ॥ ॥

श्रीगणपतिर्जयति ॥ अस्यश्रीसप्त
शतीरहस्यत्रयस्य ॥ नारायणऋषिः।
अनुष्टुप्छन्दः ॥ महाकालीमहालक्ष्मी
महासरस्वत्योदेवताः ॥ यथोक्तफल
वाप्त्यर्थंजपेविनियोगः ॥ राजोवाच ॥

भगवन्नवतारामेचाण्डिकायास्त्वयो
दिताः ॥ एतेषांप्रकृतिंब्रह्मन्प्रधानंवक्तुम
र्हसि ॥१॥ आराध्यंयन्मयादेव्याः स्व
रूपंयेनतद्‍द्विज ॥ विधिनाब्रूहिसकलं
यथावत्प्रणतस्यमे ॥२॥ ऋषिरुवाच ॥
इदंरहस्यंपरममनाख्येयंप्रचक्षते ॥ भ
क्तोसीतिनमेकिंञ्चित्तवावाच्यंनराधिप

मा.

२४०

॥३॥ सर्वस्याद्यामहालक्ष्मीस्त्रिगुणापरमेश्वरी ॥ लक्ष्यालक्ष्यस्वरूपासाव्याप्यकृत्स्नंव्यवस्थिता ॥ ४ ॥ मातुलिङ्गंगदांखेटंपानपात्रंचबिभ्रती ॥ नागंलिङ्गंचयोनिंचबिभ्रतीनृपमूर्धनि ॥५॥ तप्तकाञ्चनवर्णाभातप्तकाञ्चनभूषणा ॥ शून्यंतदखिलंस्वेनपूरया

र.

२४०

मासतेजसा ॥ ६ ॥ शून्यंतदखिलंलो
कंविलोक्यपरमेश्वरं ॥ बभाररूपमप
रंतमसाकेवलेनहि ॥ ७ ॥ साभिन्ना
ञ्जनसङ्काशादंष्ट्राञ्चितवरानना ॥
विशाललोचनानारीबभूवतनुमध्यमा
॥ ८ ॥ खड्गपाशशिरः खेटैरलंकृतचतु
र्भुजा ॥ कबंधहारंशिरसाबिभ्राणाहि

मा॰ ॥ शिरः स्रजम् ॥ ९ ॥ साप्रोवाचमहाल
२४१ ॥ क्ष्मींतामसींप्रमदोत्तमा ॥ नामकर्मंच
मेमातर्देहितुभ्यंनमोनमः ॥१०॥ तांप्रो
वाच महालक्ष्मीस्तामसीं प्रमदोत्तमा
म् ॥ ददामितवनामानियानिकर्माणि
तानिच ॥ ११ ॥ महामायामहाकाली
महामारीक्षुधातृषा ॥ निद्रातृष्णाचैक

वीराकालरात्रिर्दुरत्यया ॥ १२ ॥ इमा
नितवनामानिप्रातिपाद्यानिकर्मभिः ॥
एभिः कर्माणिते ज्ञात्वायोऽधीतेसोऽ
श्नुतेसुखम् ॥१३॥ तामित्युक्त्वामहा
लक्ष्मीः स्वरूपमपरंनृप ॥ सत्त्वाख्ये
नातिशुद्धेनगुणेनेन्दुप्रभंदधौ ॥ १४ ॥
अक्षमालाङ्कुशधरावीणापुस्तकधा

श्रा॰ २४२

रिणी ॥ साबभूववरानारीनामान्यस्यै
चसाददौ ॥ १५ ॥ महाविद्यामहावा
णीभारतीवाक्सरस्वती ॥ आर्याब्राह्मी
कामधेनुर्वेदगर्भाचधीश्वरी ॥ १६ ॥
अथोवाचमहालक्ष्मीमहाकालींसरस्व
तीम्॥ युवांजनयतांदेव्यौमिथुनेस्वानु
रूपतः ॥१७॥ इत्युक्त्वातेमहालक्ष्मीः

९ २४२

ससर्जमिथुनंस्वयम् ॥ हिरण्यगर्भौरु

चिरौस्त्रीपुंसौकमलासनौ ॥ १८ ॥ त्र

ह्मन्विधेविरञ्चेतिधातारित्याहतंनरम्

॥श्रीःपद्मेकमलेलक्ष्मीत्याहमातास्त्र

यंचताम् ॥ १९ ॥ महाकालीभारती

चमिथुनेसृजतःसह ॥ एतयोरपिरू

पाणिनामानिचवदामिते ॥२०॥ नील

कण्ठंरक्तबाहुंश्वेतांगचन्द्रशेखरम् ॥
जनयामासपुरुषंमहाकालीसितांस्त्रियम् ॥ २१ ॥ सरुद्रः शङ्करः स्थाणुः
कपर्दीचात्रिलोचनः ॥ त्रयीविद्याकामधेनुः सास्त्रीभाषास्वराक्षरा ॥ २२ ॥
सरस्वतीस्त्रियंगौरीं कृष्णांचपुरुषंनृप॥
जनयामासनामानितयोरपिवदामिते

॥ २३ ॥ विष्णुः कृष्णो हृषीकेशो
वासुदेवो जनार्दनः ॥ उमागौरीसतीच
ण्डीसुन्दरीसुभगाशुभा ॥२४॥ एवंयुव
तयःसद्यः पुरुषत्वंप्रपेदिरे ॥ चक्षुष्मन्तो
नुपश्यन्तिनेतरेतद्विदोजनाः ॥ २५ ॥
ब्रह्मणेप्रददौपत्नींमहालक्ष्मींनृपत्रयी
म् ॥ रुद्रायगौरींवरदांवासुदेवायचश्रि

यम् ॥ २६ ॥ स्वरयासहसंभूयांवर
ञ्चोऽण्डमजीजनत् ॥ बिभेदभगवा
न्रुद्रस्तद्गौर्य्यासहवीर्य्यवान् ॥ २७॥
अण्डमध्येप्रधानादिकार्यजातमभून्नृ
प ॥ महाभूतात्मकंसर्वंजगत्स्थावरजं
गमम् ॥ २८ ॥ पुपोषपालयामास
तल्लक्ष्म्यासहकेशवः ॥ संजहाररजग

त्सर्वंसहगौर्य्यामहेश्वरः ॥ २९ ॥ महा
लक्ष्मीर्महाराजसर्वसत्त्वमयीश्वरी ॥
निराकाराचसाकारा सैवनानाभिधान
भृत् ॥ ३० ॥ नामान्तरैर्निरूप्यैषाना
म्नानान्येनकेनचित् ॥ ३१ ॥ इतिप्रा
धानिकंरहस्यंसमाप्तम् ॥ * ॥
ऋषिरुवाच ॥ त्रिगुणातामसीदेवी

सात्विकीयात्वयोदिता ॥ साशवीं
चण्डिकादुर्गाभद्राभगवतीर्यते ॥ १ ॥
योगनिद्राहरेरुक्तामहाकालीतमोगु
णा ॥ मधुकैटभनाशार्थंयांतुष्टावाम्बु
जासनः ॥ २ ॥ दशवक्त्रादशभुजादश
पादाञ्जनप्रभा ॥ विशालयाराजमा
नात्रिंशल्लोचनमालया ॥ ३ ॥ स्फुरद्द

शनदंष्ट्रासाभीमरूपापिभूमिप ॥
रूपसौभाग्यकान्तीनां साप्रतिष्ठामहा
श्रियाम् ॥ ४ ॥ खड्गबाणगदाशूलश
ङ्खचक्रभुशुण्डिभृत् ॥ परिघंकार्मुकं
शीर्षंनिश्चोतद्रुधिरंदधौ ॥ ५ ॥ एषा
सावैष्णवीमायामहाकालीदुरत्यया ॥
आराधितावशीकुर्यात्पूजाकर्तुश्चराच

रम् ॥ ६ ॥ सर्वदेवशरीरेभ्योयाविभूंता
मितप्रभा ॥ त्रिगुणासामहालक्ष्मीः सा
क्षान्माहिषमर्दिनी ॥ ७ ॥ श्वेतानना
नीलभुजासुश्वेतस्तनमण्डला ॥ रक्त
मध्यारक्तपादानीलजङ्घोरुरुन्मदा ॥
८ ॥ सुचित्रजघनाचित्रमाल्याम्बरावि
भूषणा ॥ चित्रानुलेपनाकान्तिरूपसौ

भाग्यशालिनी ॥ ९ ॥ अष्टादशभुजा
पूज्यासासहस्रभुजासती॥ आयुधान्य
त्रवक्ष्यन्तेदक्षिणाधः करक्रमात्॥१०॥
अक्षमालाचक्रमलंबाणोऽसिः कुलिशं
गदा॥ चक्रंत्रिशूलंपरशुः शङ्खोघण्टा
चपाशक ः॥११॥ शक्तिर्दण्डश्चर्मचापं
पानपात्रंकमण्डलुः॥ अलंकृतभुजामे

भिरायुधैः कमलासनाम् ॥ १२ ॥
सर्वदेवमयीमीशांमहालक्ष्मीमिमांनृप
पूजयेत्सर्वलोकानां सदेवानांप्रभुर्भवे
त ॥ १३ ॥ गौरीदेहात्समुद्भूतायासत्त्वै
कगुणाश्रया ॥ साक्षात्सरस्वतीप्रोक्ता
शुम्भासुरनिबर्हिणी ॥ १४ ॥ दधौचा
ष्टभुजाबाणान्मुसलंशूलचक्रभृत् ।

शंखंघण्टांलाङ्गलंचकार्मुकंवसुधाधिप
॥ १५ ॥ एषासंपूजिताभक्त्यासर्वज्ञ
त्वंप्रयच्छति ॥ निशुम्भमाथिनीदेवीशु
म्भासुरनिबर्हिणी ॥ १६ ॥ इत्युक्तानि
स्वरूपाणिमूर्तीनांतवपार्थिव ॥ उपास
नंजगन्मातुः पृथगासांनिशामय १७
महालक्ष्मीर्यदापूज्यामहाकालीसर

स्वती ॥ दक्षिणोत्तरयोः पूज्येपृष्ठतो मिथुनत्रयम् ॥ १८ ॥ विरञ्चिः स्वर यामध्येरुद्रोगौर्याचदक्षिणे ॥ वामे लक्ष्म्याहृषीकेशः पुरतोदेवतात्रयम् ॥ १९ ॥ अष्टादशभुजामध्येवामेचा स्यादशानना ॥ दक्षिणेष्टभुजालक्ष्मी र्महतीतिसमर्चयेत ॥ २० ॥ पूर्वादि

दलतः पूज्याअसिताङ्गादिभैरवा ॥ अ
ष्टादशभुजाचैषायदापूज्यानराधिप ॥
॥ २१ ॥ दशाननाचाष्टभुजादक्षिणो
त्तरयोस्तदा ॥ दशाननायदापूज्याद
क्षिणोत्तरयोस्तदा ॥ २२ ॥ कालमृ
त्यूचसंपूज्यौसर्वारिष्टप्रशान्तये॥ यदा
चाष्टभुजापूज्याशुम्भासुरनिबर्हिणी

॥२३॥ नवास्याः शक्तयः पूज्यास्तदा रुद्रविनायकौ ॥ नमोदेव्याइतिस्तोत्रै र्महालक्ष्मींसमर्चयेत् ॥२४॥ अवतारत्र याचीयां स्तोत्रमन्त्रास्तदाश्रयाः ॥ अष्टादशभुजाचैषापूज्यामहिषमर्दिनी ॥२५॥ महालक्ष्मीर्महाकालीसैवप्रोक्ता सरस्वती॥ ईश्वरीपुण्यपापानांसर्वलो

कमहेश्वरी ॥२६॥ महिषान्तकरीयेन
पूजितासजगत्प्रभुः ॥पूजयेज्जगतांधा
त्रींचण्डिकांभक्तवत्सलाम् ॥ २७ ॥
अर्घ्यादिभिरलङ्कारैर्गन्धपुष्पैस्तथोत्त
मैः ॥ धूपैर्दीपैश्चनैवेद्यैर्नानाभक्ष्यसम
न्वितैः ॥२८॥ रुधिराक्तेनबलिनामांसे
नसुरयानृप ॥ बलिमांसादिपूजेयं वि

वै.

२५०

प्रव्रज्यामयेरिता ॥२९॥ तेषांकिलसुरा
मांसैर्नोक्त पूजानृपकचित् ॥प्रणामाच
मर्नायैश्चचन्दनेनसुगन्धिना ॥३०॥
सकर्पूरैश्चताम्बूलैर्भक्तिभावसमान्वि
तैः ॥वामभागेग्रतोदेव्याश्छिन्नशीर्षम
हासुरम् ॥३१॥पुजयेन्मांहिषंयेनप्राप्तं
सायुज्यमीशया ॥ दक्षिणेपुरतःसिंहंस

६

२५०

मग्रंधर्ममीश्वरम् ॥ ३२ ॥ वाहनंपूजये
द्देव्याधृतंयेनचराचरम् ॥ ततःकृताञ्ज
लिर्भूत्वास्तुवीतचरितैरिमैः ॥३३॥एके
नवामध्यमेनन्नैकेनेतरयोरिह ॥ चरि
तार्धंतुनजपेज्जपञ्छिद्रमवाप्नुयात्
॥३४॥स्तोत्रमन्त्रैःस्तुवीतेमांयदिवाज
गदम्बिकाम्॥ प्रदक्षिणानमस्कारान्कृ

त्वामूर्ध्निकृताञ्जलिः॥३५॥ क्षमापये
ज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः ॥ प्रति
श्लोकञ्चजुहुयात्पायसन्तिलसर्पिषा
॥३६॥ जुहुयात्स्तोत्रमन्त्रैर्वा चण्डिका
यैशुभंहविः ॥ भूयोनामपदैर्देवीं पूजये
त्सुसमाहितः॥३७॥ प्रयतः प्राञ्जलिः
प्रह्वः प्राणानारोप्यचात्मनि ॥ सुचिर

म्भावयेद्देवीं चण्डिकान्तन्मयोभवेत्
॥३८॥ एवंयः पूजयेद्भक्त्या प्रत्यहम्पर
मेश्वरीम् ॥ भुक्त्वाभोगान्यथाकामंदे
वीसायुज्यमाप्नुयात्॥३९॥ योनपूजय
तेनित्यंचण्डिकाम्भक्तवत्सलाम् ॥
भस्मीकृत्यास्यपुण्यानिनिर्दहेत्परमे
श्वरी॥४०॥ तस्मात्पूजयभूपालसर्वलो

कमहेश्वरीम् ॥ यथोक्तेन विधानेन च
ण्डिकां सुखमाप्स्यसि ॥४१॥ इतिवैकृ
तिकंरहस्यंसमाप्तम् ॥

ऋषिरुवाच॥नन्दाभगवतीनामया
भविष्यातिनन्दजा॥ स्तुतासम्पूजिताभ
क्त्यावशीकुर्याज्जगत्त्रयम ॥१॥ कन
कोत्तमकान्तिः सासुकान्तिः कनका

म्बरा ॥ देवीकनकवर्णाभाकनकोत्तम

भूषणा ॥२॥ कमलांकुशपाशाब्जैरलं

कृतचतुर्भुजा ॥ इन्दिराकमलालक्ष्मीः

साश्रीरुक्माम्बुजासना ॥ ३ ॥ यारक्त

दन्तिकानामदेवीप्रोक्तामयानघ ॥ त

स्याः स्वरूपंवक्ष्यामिशृणुसर्वभयापह

म ॥ ४ ॥ यच्छ्रुत्वासर्वपापेभ्योमुच्य

मू०

२५३

तेनात्रसंशयः ॥ रक्ताम्बरारक्तवर्णार
क्तसर्वाङ्गभूषणा ॥ ५ ॥ रक्तायुधारक्त
नेत्रारक्तकेशातिभीषणा ॥ रक्ततीक्ष्ण
नखारक्तरसनारक्तदन्तिका ॥ ६ ॥पति
नारीवानुरक्तादेवीभक्तम्भजेज्जनम् ॥
वसुधेवविशालासासुमेरुयुगलस्तनी ७
दीर्घौलम्बावतिस्थूलौतावतीवमनोह

२

२५३

रौ ॥ कर्कशाववतिकान्तौतौसर्वानन्दप
योनिधी ॥ ८ ॥ भक्तान्संपाययेद्देवीस
र्वकामदुघौस्तनौ ॥ खड्गपात्राशिरः
खेटैरलंकृतचतुर्भुजा ॥ ९ ॥ आख्याता
रक्तचामुण्डादेवीयोगेश्वरीतिच ॥ अ
नया व्याप्तमखिलंजगत्स्थावरजंगम
म् ॥ १० ॥ इमांयःपूजयेद्भक्त्यासव्या

प्नोतिचराचरम् ॥ भुक्त्वाभोगान्यथा
कामं देवीसायुज्यमाप्नुयात् ॥ ११ ॥
अधीतेयइमंनित्यंरक्तदन्त्यावपुः स्त
वम्।तंसापरि चरेद्देवीपतिंप्रियमिवाङ्ग
ना ॥ १२ ॥ शाकम्भरीनीलवर्णानी
लोत्पल विलोचना ॥ गम्भीरनाभि
स्त्रिवली विभूषिततनूदरी ॥ १३ ॥ सु

कर्कशसमोत्तुंगवृत्तपीनघनस्तनी॥ मु
ष्टिशिलीमुखापूर्णंकमलंकमलालया॥
१४ ॥ पुष्पपल्लवमूलादिफलाढ्यंशा
कसंचयम् ॥ काम्यानन्तरसैर्युक्तंक्षुतृ
ण्मृत्युजरापहम् ॥ १५ ॥ कार्मुकञ्च
स्फुरत्कान्तिबिभर्तिपरमेश्वरी ॥ शाक
म्भरीशताक्षीसासैवदुर्गाप्रकीर्तिता १६

म्.

२५५

उमागौरीसती चण्डी कालिकासाच
पार्वती ॥ शाकम्भरींस्तुवन्ध्यायञ्ज
पन्सम्पूजयन्नमन् ॥ १७ ॥ अक्षय्यम
श्नुतेशीघ्रमन्नपानामृतञ्जलम् ॥ भी
माऽपिनीलवर्णाबादंष्ट्रादशनभासुरा ॥
१८ ॥ विशाललोचनानारीवृत्तपीन
पयोधरा ॥ चन्द्रहासञ्चडमरुंशिरः

र.

३५५

पात्रंचबिभ्रती ॥ १९ ॥ एकवीराकाल
रात्रिः सैवोक्ताकामदास्तुता ॥ तेजोम
ण्डलदुर्धर्षाभ्रामरीचित्रकान्तिभृत ॥
२० ॥ चित्रभ्रमरसङ्काशामहामारीति
गीयते ॥ इत्येतामूर्त्तयोदेव्या व्याख्या
ता वसुधाधिप ॥ २१ ॥ जगन्मातुश्च
ण्डिकायाः कीर्तिताः कामधेनवः ॥

मू. इदंरहस्यंपरमंनवाच्यंकस्यचित्त्वया ॥ ९

२५६ २२ ॥ व्याख्यानन्दिव्यमूर्तीनामधी

ष्ठावाहितःस्वयम् ॥ एत स्यास्त्वंप्रसा

देन सर्वमान्योभविष्यसि ॥ २३ ॥ स

र्वरूपमयीदेवीसर्वंदेवीमयञ्जगत् ॥

अतोहंविश्वरूपांत्वांनमामिपरमेश्व २५६

रीम् ॥ २४ ॥ इतिमूर्तिरहस्यंसमाप्तम् ॥

❀ श्रीगणेशाय नमः ❀

* अथ सरस्वतीकवचप्रारम्भः *

ब्रह्मोवाच ॥ शृणुवत्सप्रवक्ष्यामिक
वचंसर्वकामदम् ॥ श्रुतिसारंश्रुतिसुखंश्रु
त्युक्तंश्रुतिपूजितम् ॥ १ ॥ उक्तंकृष्णेन
गोलोकेमह्यंवृन्दावनेवने ॥ रासेश्वरेण
विभुनागासेनरासमण्डले ॥ २ ॥ अती

वगोपनीयंच कल्पवृक्षसमम्परम् ॥ अ
श्रुताद्भुतमन्त्राणां समूहैश्चसमान्वि
तम् ॥ ३ यद्धृत्वापठनाद्ब्रह्मन् बुद्धिमां
श्चबृहस्पतिः ॥ यद्धृत्वाभगवाञ्छु
क्रः सर्वदैत्येषुपूजितः ॥ ४ ॥ पठनाद्धारणा
द्वाग्मी कवीन्द्रोवाल्मिकोमुनिः ॥ ५ ॥
स्वायम्भुवो मनुश्चैव यद्धृत्वासर्वपू

जितः ॥ कणादो गौतमः कणवः पाणि
निः शाकटायनः ॥६॥ ग्रन्थं चकार
यद्दृत्वादक्षः कात्यायनः स्वयम् ॥७॥
धृत्वावेदविभागञ्चपुराणान्यखिला
निच ॥ चकार लीलामात्रेण कृष्ण द्वै
पायनः स्वयम् ॥८॥ शातातपश्च संव
र्तो वासिष्ठश्च पराशरः ॥ यद्दृत्वा पठ

स.

२५८

नाद् ग्रन्थंयाज्ञवल्क्यश्चकारसः ॥
९ ॥ ऋष्यशृङ्गो भरद्वाजश्चास्तीको
देवलस्तथा ॥ जैगीषव्योऽथ जाबालि
र्यंद्धृत्वा सर्वपूजितः ॥ १० ॥ कवच
स्यास्यविप्रेन्द्रऋषिरेषप्रजापतिः ॥ स्व
यंबृहस्पतिश्छन्दोदेवोरासेश्वरः प्रभुः
॥ ११ ॥ सर्वतत्त्वपरिज्ञानसर्वार्थसाध

क.

२५८

नेषुच ॥ कवितासुचसर्वासुविनियोगः

प्रकीर्त्तितः॥ १२ ॥ ॐ ह्रींसरस्वत्यैस्वा

हाशिरोमेपातुसर्वतः ॥ श्रींवाग्देवतायै

स्वाहाभालंमेसर्वदावतु ॥ १३ ॥ ॐस

रस्वत्यैस्वाहेतिश्रोत्रंपातुनिरन्तरम् ॥

ॐ श्रींह्रींभारत्यैस्वाहानेत्रयुग्मंसदाव

तु॥१४॥ॐ ह्रींवाग्वादिन्यैस्वाहानासां

मेसर्वतोऽवतु ॥ ह्रींविद्याधिष्ठातृदेव्यै
स्वाहा ओष्ठंसदावतु॥ १५॥ॐश्रींह्रींब्रा
ह्म्यैस्वाहेतिदन्तपंक्तीः सदावतु ॥ ऐंमि
त्येकाक्षरोमन्त्रोममकण्ठंसदावतु ॥
१६ ॥ ॐश्रींह्रींपातुमेग्रीवांस्कन्धंमे
श्रीः सदावतु ॥ श्रींविद्याधिष्ठातृदेव्यै
स्वाहावक्षः सदावतु ॥ १७॥ ॐश्रीं

विद्यास्वरूपायैस्वाहामेपातुनाभिका

म् ॥ ॐश्रींह्रींवाण्यैस्वाहेतिममपृष्ठंस

दावतु ॥ १८ ॥ ॐसर्ववर्णात्मिकायै

पादयुग्मंसदावतु ॥ ॐरागाधिष्ठातृदे

व्यैसर्वाङ्गंमेसदावतु ॥ १९ ॥ ॐसर्व

कण्ठवासिन्यैस्वाहाप्राच्यांसदावतु

ॐह्रींजिह्वाग्रवासिन्यै स्वाहाऽग्निदि

स.

२६०

शिरक्षतु ॥ २० ॥ ॐऐंह्रींश्रींसरस्वत्यै
बुधजनन्यैस्वाहा ॥ सततंमन्त्रराजोयं
दक्षिणेमांसदावतु ॥ २१ ॥ ॐह्रींश्रीं
द्व्यक्षरोमन्त्रोनैर्ऋत्यांमेसदावतु ॥ क
विजिह्वाग्रवासिन्यैस्वाहामांवारुणेवतु
॥ २२ ॥ ॐसदाम्बिकायै स्वाहावाय
व्यांमांसदावतु ॥ ॐगद्यपद्यवासिन्यै

क॰

२६०

स्वाहामामुत्तरेऽवतु ॥ २३ ॥ ॐ सर्व
शास्त्रवासिन्यैस्वाहैशान्यांसदावतु ॥
ॐ ह्रींसर्वपूजितायैस्वाहाचोर्ध्वंसदाव
तु ॥ २४ ॥ ऐंह्रींपुस्तकवासिन्यैस्वा
हाऽधोमांसदावतु ॥ ॐग्रन्थबीजरूपा
यैस्वाहामांसर्वतोऽवतु ॥ २५ ॥ इति
ते कथितंविप्रसर्वमन्त्रौघविग्रहम् ॥ इदं

स. २६१

विश्वजयन्नामकवचंब्रह्मरूपिणम् ॥
२६ ॥ पुराश्रुतन्धर्मवक्त्रात्पर्वतेगन्ध
मादने । तवस्नेहान्मयाख्यातम्प्रवक्त
व्यंनकस्यचित् ॥ २७ ॥ गुरुमभ्यर्च्य
विधिवद्वस्त्रालङ्कारचन्दनैः ॥ प्रणम्य
दण्डवद्भूमौकवचन्धारयेत्सुधीः॥२८
पञ्चलक्षजपेनैवसिद्धंतुकवचंभवेत् ॥

क. २६१

यदिस्यात्सिद्धकवचोबृहस्पतिसमो
भवेत् ॥ २९ ॥ महावाग्मीकवीन्द्रश्च
त्रैलोक्यविजयीभवेत् ॥ शक्नोतिसर्वं
जेतुंसकवचस्यप्रसादतः ॥ ३० ॥इति
तेकाण्वशाखोक्तंकथितंकवचंमुने ॥
स्तोत्रंपूजाविधानञ्चध्यानञ्चवन्दन
न्तथा ॥३० ॥ इति श्रीब्रह्मवैवर्तेमहापु

राग्गेप्रकृतिखण्डेनारायणनारदसंवादे सरस्वतीकवचंनामचतुर्थोऽध्यायः।४।

॥ इति ॥

पुस्तक मिलने का पता

मैनेजर भार्गव पुस्तकालय

चौक बनारस ।

# सूचीपत्र ।

| | |
|---|---|
| अनन्त व्रत कथामूल | -) |
| ,, भा० टी० | =) |
| अक्षय नौमी | )॥ |
| अशौच निर्णय | =) |
| औषद सार | =) |
| स्तोत्र रत्नाकर | १।) |
| एकादशी माहात्म्य— | |
| भा० टी० | |
| एकादशीमाहात्म्यभाषा | =) |
| एकोदिष्टश्राद्धमूल | -) |
| ,, ,, भा. टी. | =)॥ |
| कलश प्रतिष्ठा | )॥ |
| गोपालसहस्रनामगुटका | =)॥ |
| गंगालहरी मूल | -) |
| ,, ,, भा. टी. | =) |
| गणेश पुराण | -)॥ |
| गुरू गीता | -) |
| गीता भा टी० बड़ा जि | १॥=) |

| | |
|---|---|
| „ „ गुटका १) | चित्रगुप्त कथा भा० टी० ।=) |
| गीत गोविन्द भा' टी. ।।।) | चित्रगुप्त भाषा =) |
| गणेश माला )।। | चौबिस गायत्री ≡) |
| ग्रहगोचर भा. टी. –) | चमतकार चिन्तामणि ≡)।।। |
| गरुड़ पुराण भा. टी. | चाणक्यनीतिदर्पण ।–) |
| गिता मूल मोटे अत्तर का १।) | वृहत्ज्योतिषसार भा.टी.१।।=) |
| गृहभूषण (पिंडदर्पण ) ।।–) | योगवाशिष्ठ २ प्रकर्ण १) |
| गणपत पूजा )।।। | तत्त्वबोध ।) |
| गौदान पद्धती )।। | तिथि निर्णय –)। |
| गर्भगीता )॥ | तर्पण विधि )।। |
| चर्पट पंजरी मूल ।।।) सै० | तर्क संग्रह भा० टी० ।।) |

| | | | |
|---|---|---|---|
| दुर्गामूल सांची छोटा | ॥) | बगला मुखी स्तोत्र | )॥ |
| „ „ बड़ी | १॥) | विन्ध्यवासिनी पञ्चरत्न | )॥ |
| दुर्गा कवच | ४) सै० | बन्दीमोचन छो० | )॥ |
| धातु रूपावली | ≡) | „ „ बडा | −) |
| नव्वाबखानखाना जोतिष | ।) | बहुलाव्रत कथा | )॥ |
| नवग्रह स्तोत्र | )॥ | आसिष्ठी हवन | ≡) |
| नारद गीता भा० टी० | )॥ | वेदान्त सार | ≡) |
| नित्यकर्म पद्धति मूल | =) | व्यंजन प्रकाश | ≡) |
| नान्हदत्त पचीसी मूल | )॥ | विवाह पद्धति मूल | =) |
| नारायण कवच | )॥ | „ „ भा. टी. | ।≡) |
| विष्णु सहस्रनाम मूल | −)॥ | बद्रीनाथ स्तोत्र | )॥ |

| | |
|---|---|
| मृत्युञ्जय स्तोत्र | )॥। |
| महिमन भा० टी० | –) |
| शिवमहीमन मूल | )॥। |
| महाविद्यास्तोत्र | )॥। |
| भीनगीता | )॥ |
| मुहूर्त चिन्तामणि मूल | ।=) |
| महालक्ष्मी स्तोत्र | –)॥ |
| रामायण मझोला घरू | ३) |
| रामायण गुटका, | १॥) |
| रामायण किष्किन्धाकाण्ड ३२ पे० | –)॥ |
| रामायण किष्किन्धाकाण्ड १६ पे० | –) |
| रामायण किष्किन्धाकाण्ड ८ पे | –) |
| रामायण सुन्दरकाण्ड ८ पे० | =) |
| ,, ,, १६ पे० | –)॥ |
| ,, ,, ३२ पे० | =) |
| रामायणबालकाण्ड | ।=) |
| रामायण मूल | =) |
| मानस शंकावली | १) |
| रामकलेवा | –)॥ |

